| नम्बर। | ग्रन्थनाम। | ग्रन्थकारनाम। | विषयः। | Printed or MS. | अक्षरभेदः। |
|---|---|---|---|---|---|
| I. C. 7<br>I. C. 70 | मृच्छकटिकम् | शूद्रकनृपतिः | नाटकम् | Published under authority of the Committee of Public Instruction, Calcutta, 1829 | नागर |

THE

# MRICHCHHAKATI:

A

## COMEDY;

BY

SUDRAKA RÁJA'S



WITH A COMMENTARY EXPLANATORY

OF THE

PRÁKRIT PASSAGES.

PUBLISHED UNDER THE AUTHORITY OF THE COMMITTEE

OF

Public Instruction.



PRINTED AT THE EDUCATION PRESS.



1829.

# मृच्छकटिकनाटकस्य भूमिका।

अनेकदेशप्रचलितासु राजावलीषु कोऽपि राजा शूद्रको नाम विक्रमादित्यात् प्राचीनतरः प्रसिद्धः; सोऽपि आन्ध्रदेशो त्पन्नानां मगधदेशराजानां प्रथमोऽभवत्। मगधदेशस्य राजधानी पाटलिपुत्रनाम नगरं, किन्तु कामन्दकीयग्रन्थकारेण शूद्रकस्य राजधान्यवन्ती निर्णीता, केषुचित् पुस्तकेषु च यत्र शूद्रकस्य नाम लिखितं तत्र शिप्रकः शूरकः सिन्धुक एव पाठो दृश्यते; तद्धेतुना शूद्रकस्य नामनगरयोर्निश्चयो नास्ति, केवल ञ्चैतदनुष्ठितं यन्मृच्छकटिकस्य पूर्व्वरङ्गे निर्द्दिष्टं।

स राजा गुणवान् गुणवतां पालकस्य; तेन श्रीविक्रमादित्य समयपूर्व्वं सार्द्धशतवत्सरं मृच्छकटिकनामधेयमपूर्व्वं नाटकं विरचितं। अनन्तरं वहुकालवशात्तन्नाटकं प्रायशो दुर्लभमे वासीत्केवलं दशरूपकादिग्रन्थेषु प्रमाणत्वेनोपन्यस्तस्य क्वचि देकश्लोकस्य क्वचिदर्द्धश्लोकस्य वा पठनात्तन्नाम नहि विस्मृतं; किन्त्वल्पकाले गते श्रीमता उलिसेनसाहेवेन काशीपुरीमधिति ष्ठता श्रीलक्ष्मीचितपण्डितसकाशादेकं पुस्तकमासादितं, पुनः कलिकातानगरमानीतं। इदानीञ्च मुद्राचरेण तस्य वहुलं वहुकालस्थायित्वञ्च संस्थापितं। अस्मिन् पुस्तके अतिप्राचीन समयस्य रीतयोद्रष्टव्याः यथा पूर्व्वं भरतदेशस्थैरनुष्ठिताः; एवञ्च रूपकाणां ये गुणाः प्रशंसनीयाः ते सर्व्वेऽत्र संगृहीताः सन्ति॥

## विश्रामचिह्नानि।

पाठकवर्गाणां सुबोधनाय मुद्राकरणसमये नवीना रीतिरनुसृता। यदा सन्धिः शिथिला भवति तदा पदानां किञ्चिदन्तरं कृतं; एवञ्च यदा वाक्यानामर्थः सम्पूर्णः, किम्वा किञ्चिद्व्यवच्छिन्नोभवति, गद्यपद्यपठने च स्वरस्य विश्रामोयुज्यते, तदा तत्स्थाने विश्रामपरिमाणस्य चिह्नं मुद्रितमस्ति—यथा.

, एकमात्रं

; द्विमात्रं

। त्रिमात्रं किम्वा वाक्यसम्पूरणं

? प्रश्ने

! आवेगे

# ॥ मृच्छकटिकं ॥

---

## ॥ प्रथमाङ्कः ॥

---

### ॥ नान्दी ॥

पर्य्यङ्कग्रन्थिबन्धद्विगुणितभुजगाश्लेषसम्वीतजानो
रन्तःप्राणावरोधव्युपरतसकलज्ञानरुद्धेन्द्रियस्य;
आत्मन्यात्मानमेव व्यपगतकरणं पश्यतस्तत्त्वदृष्ट्या
शम्भोर्व्वः पातु शून्येक्षणघटितलयब्रह्मलग्नः समाधिः । १ ।

अपि च ।

पातु वो नीलकण्ठस्य कण्ठः श्यामाम्बुदोपमः
गौरीभुजलता यत्र विद्युल्लेखेव राजते । २ ।

॥ नान्द्यन्ते सूत्रधारः ॥

अलमनेन परिषत्कुतूहलविमर्द्दकारिणा परिश्रमेण । एवमहमार्य्यमिश्रान् प्रणिपत्य विज्ञापयामि; यदिदं वयं मृच्छकटिकं नाम प्रकरणं प्रयोक्तुं व्यवसिताः । एतत्कविः किल ।

द्विरदेन्द्रगतिश्चकोरनेत्रः परिपूर्णेन्दुमुखः सुविग्रहश्च,
द्विजमुख्यतमः कविर्बभूव, प्रथितः शूद्रक इत्यगाधसत्त्वः । ३

अपिच।

ऋग्वेदं सामवेदं गणितमथ कलां वैशिकीं हस्तिशिक्षां,
ज्ञात्वा, शर्व्वप्रसादाद्व्यपगततिमिरे चक्षुषी चोपलभ्य;
राजानं वीक्ष्य पुत्रं परमसमुदयेनाश्वमेधेन चेष्ट्वा,
लब्ध्वा चायुःशताब्दं दशदिनसहितं शूद्रकोऽग्निं प्रविष्टः॥ ।

अपिच।

समरव्यसनी प्रमादशून्यः ककुदं वेदविदां तपोधनश्च,
परवारणवाहुयुद्धलुब्धः क्षितिपालः किल शूद्रकोबभूव।

अस्याञ्च तत्कृतौ।

अवन्तिपुर्य्यां द्विजसार्थवाहोयुवा दरिद्रः किल चारुदत्तः,
गुणानुरक्ता गणिका च यस्य वसन्तशोभेव वसन्तसेना,
तयोरिदं सत्सुरतोत्सवाश्रयं, नयप्रचारं, व्यवहारदुष्टतां,
खलस्वभावं, भवितव्यतां, तथा चकार सर्व्वं किल शूद्रकोनृपः।

॥ परिक्रम्यावलोक्य च ॥ अये शून्येयमस्मत्सङ्गीतशाला। क नु गताः कुशीलवाभविष्यन्ति ॥विचिन्त्य॥ आः ज्ञातं।

शून्यमपुत्रस्य गृहं, चिरशून्यं नास्ति यस्य सन्मित्रं,
मूर्खस्य दिशः शून्याः, सर्व्वं शून्यं दरिद्रस्य।

कृतञ्च सङ्गीतकं मया। अनेन चिरसङ्गीतोपासनेन ग्रीष्मसमये प्रचण्डदिनकरकिरणोच्छुष्कपुष्करवीजमिव प्रचलिततारके क्षुधा ममाक्षिणी खटखटायेते; तद्यावद्गृहिणीमाहूय पृच्छामि अस्ति किञ्चित्प्रातराशोनवेति; एषोऽस्मि,भोः॥ कार्य्यवशात्प्रयोगवशाच्च प्राकृतभाषी संवृत्तः॥ अविद! भोः भोः

चिरसंगीदोवासणेण सुक्खपोक्खरणालाइं विश्र मे बुभुक्खाए मिलाणाइं श्रङ्गाइं। ता जाव गेहं गदुश्र जानामि श्रत्थि किंवि कुटुम्बिणीए उववादिदं ण वेत्ति (१) ॥ परिक्रम्यावलोक्य च ॥ एदं त्तं श्रह्माणं गेहं, ता पविसामि (२) ॥ प्रविश्यावलोक्य च ॥ हीमाणहे! किं णु खु श्रह्माणं गेहे श्रवरं विश्र सम्बिहाणश्रं वट्टदि। श्राश्रामि तण्डुलोदश्रण्पवाहा रच्छा लोहकडाह परिश्रंतण कसणसाराकिदविसेसश्रा विश्र जुश्रदी श्रहिश्रदरं सोहदि भूमी, सिणिद्धेण गन्धेण उद्दीवन्ती विश्र, श्रधिश्रं बाधेदि मं बुभुक्खा। ता किं पुव्वविढत्तं णिहाणं उप्पणं भवे। श्रादु, श्रहं जेव्व बुभुक्खादो श्रोदणमश्रं जीश्रलोश्रं पेक्खामि। णत्थि किल पादरासो श्रह्माणं गेहे। पाणच्चश्रं बाधेदि मं बुभुक्खा; इध सव्वं णवं विश्र संविहाणं वट्टदि। एक्का वणश्रं पीसेदि; श्रवरा सुमणाउं गुम्फेदि (३) ॥विचिन्त्य॥ किं णेदं; भोदु;

---

(१) कष्टं कष्टं भोः भोः चिरसङ्गीतोपासनेन शुष्कपुष्करनालानीव मम बुभुक्षया म्लानानि श्रङ्गानि; तत् यावत् गेहं गत्वा जानामि श्रस्ति किमपि कुटुम्बिन्या उपपादितं नवा; इति।

(२) एतत् तत् श्रस्माकं गेहं, तत् प्रविशामि।

(३) श्राश्चर्य्यं किं नु खलु श्रस्माकं गेहे श्रपरमिव सम्बिधानकं वर्त्तते। श्रायामि तण्डुलोदकप्रवाहा रथ्या लोहकटाह

कुडुम्बिणिं सद्दाविअ, परमत्थं जाणिस्सं(१) ॥नेपथ्याभिमुख मवलोक्य॥ अज्जे। इदो दाव (२)।

नटी। प्रविश्य। अज्ज, इअह्मि (३)।

सूत्र। अज्जे, साअदं दे (४)।

नटी। आणवेदु अज्जो; को णिओओ अणुचिट्ठीअ दुत्ति (५)।

---

परिवर्त्तनकृष्णसारा कृतविशेषकाइव युवती अधिकतरं शोभ ते भूमी स्निग्धगन्धेन उद्दीप्यमानेव अधिकं बाधते मां बुभुक्षा। तत्किं पूर्व्वार्जितं निधानं उत्पन्नं भवेत्। अथवा अहमेव बुभुक्षातः ओदनमयं जीवलोकं पश्यामि। नास्ति किल प्रात राशोऽस्माकं गेहे प्राणाधिकं मां बुभुक्षा बाधते इह सर्व्वं नवमिव सम्विधानकं वर्त्तते। एका वर्णकं कस्तूर्य्यादिकं समा लभनं पिनष्टि अपरा सुमनसः गुम्फति।

(१) किं न्वेदं भवतु कुटिम्बिनीं शब्दाय्य परमार्थं ज्ञास्यामि।

(२) आर्य्ये इतः तावत्।

(३) आर्य्य इयं अस्मि।

(४) आर्य्ये स्वागतं ते।

(५) आज्ञापयतु आर्य्यः कः नियोगः अनुष्ठीयतामिति।

सूत्र। अज्जे; चिरसङ्गीदोवासणेण ॥ इत्यादि पठित्वा ॥ अत्थि किं वि अह्माणं गेहे असिदव्वं ण वेत्ति (१)।

नटी। अज्ज सव्वं अत्थि (२)।

सूत्र। किं किं अत्थि (३)।

नटी। तं जधा। गुडोदनं पिअं, दहीं, तण्डुलाइं, अज्जेण अत्तव्वं रसाअणं, सव्वं अत्थित्ति। एअं ते देवा आसासेदु (४)।

सूत्र। अज्जे; किं अह्माणं गेहे सव्वं अत्थि; आदु, परिह ससि (५)।

नटी। ॥ स्वगतं ॥ परिहसिस्सं दाव ॥ प्रकाशम् ॥ अज्ज; अत्थि—आवणे (६)।

(१) आर्य्ये; चिरसङ्गीतोपासनेन, पुष्करनालानीव मे बुभुक्षया म्लानानि अङ्गानीति, पठित्वा; अस्ति किमपि अस्माकं गेहे अत्तव्यं नवा इति।

(२) आर्य्य; सर्व्वं अस्ति।

(३) किं किं अस्ति।

(४) तत् यथा। गुडोदनं प्रियं, दधि, तण्डुलाः, आर्य्येण अत्तव्यं रसायनं, सर्व्वं अस्ति इति। एवं ते देवा आशंसन्तु।

(५) आर्य्ये; किं अस्माकं गेहे सर्व्वं अस्ति; अथवा, परिहससि।

(६) परिहसिष्यामि तावत्। आर्य्य; अस्ति वणिग्वीथ्यां।

सूत्र। ॥ सक्रोधम् ॥ आः अणज्जे! एअं दे आसा छिज्जिस्सदि। अभावं अ गमिस्ससि। जं दाणिं अहं वरण्डलम्बुओ विअ दूरमुक्खिविअ पाडिदो (१)।

नटी। मरिसेदु अज्जो; परिहासो क्खु मए कदो (२)।

सूत्र। ता किं उण इदं णवं विअ संविहाणअं वट्टदि; एक्का वणअं पीसेदि, अवरा सुमणाओ गुम्फेदि। इअञ्च पञ्च वर्णकुसुमोपहारसोहिदा भूमी (३)।

नटी। अज्ज उववासो गहिदो (४)।

सूत्र। किंणामधेओ अअं उववासो (५)।

---

(१) आः अनार्य्ये! एवं तव आशा छेत्स्यति। अभावं च गमिष्यसि। यत् इदानीं अहं वरण्डलम्बुकइव दूरं उत्क्षिप्य पातितः। वरण्डोदीर्घकाष्टं तस्य लम्बुकः तत्प्रान्तनिबद्धोमृत्तिकास्तूपः।

(२) मृष्यत्वार्य्यः परिहासः खलु मया कृतः।

(३) तत् किं पुनरिदं नवमिव सन्निधानकं वर्त्तते; एका वर्णकं पिनष्टि, अपरा सुमनसोगुम्फति। इयञ्च पञ्चवर्णकुसुमोपहारशोभिता भूमी।

(४) अद्य उपवासोगृहीतः।

(५) किंनामधेयोऽयमुपवासः।

नटी। अहिरूअवदी णाम (१)।

सूत्र। अज्जे, इहलोइओ, आदु पारलोइओ (२)।

नटी। अज्ज, पारलोइओ (३)।

सूत्र। ॥सरोषं॥ पेक्खन्तु पेक्खन्तु अज्जमिस्सा; मम केरकेण भत्तपरिव्वएण पारलोइओ भत्ता अण्णेसीअदि (४)।

नटी। अज्ज, पसीद पसीद; तुमं जेव्व मम जम्मन्तरेवि भत्ता भविस्ससित्ति उववसिदह्मि (५)।

सूत्र। अध अअं उववासो केण उवदिट्ठो (६)।

नटी। अज्जस्स जेव्व पिअवअस्सेण चुण्णवुड्ढेण (७)।

(१) अभिरूपपतिर्नाम।

(२) आर्य्ये इहलौकिकः अथवा पारलौकिकः।

(३) आर्य्य पारलौकिकः।

(४) प्रेक्षन्तां प्रेक्षन्तां आर्य्यमिश्राः; मदीयेन भक्तपरिव्ययेन पारलौकिकोभर्त्ता अन्विष्यते।

(५) आर्य्य प्रसीद प्रसीद त्वमेव मम जन्मान्तरेऽपि भर्त्ता भविष्यसीति उपोषितास्मि।

(६) अथ अयमुपवासः केन उपदिष्टः।

(७) आर्य्यस्यैव प्रियवयस्येन चूर्णवृद्धेन।

सूत्र। ॥सकोपं॥ आः दासीए पुत्ता चुस्सवुड्ढा; कदा णु क्खु तुमं कुविदेण रण्णा पालएण णववहूकेसकलापं विअ ससुअन्धं कप्पिज्जन्तं पेक्खिस्सं (१)।

नटी। पसीददु अज्जो; णं अज्जस्स जेव्व पारलोइओ अअं उववासो अणुचिट्ठीअदि त्ति ॥पादयोः पतति॥ (२)।

सूत्र। अज्जे; उट्ठेहि, उट्ठेहि; कधेहि कधेहि इध उववासेकेण कज्जं (३)।

नटी। अह्मारिसजणजोग्गेण बह्मणेण उवणिमन्तिदेण(४)।

सूत्र। तेण हि गच्छदु अज्जा; अहंपि अह्मारिसजणजोग्गं बह्मणं उवणिमन्तेमि (५)।

---

(१) आः (आक्षेपे) दास्याः पुत्र चूर्णवृद्ध; कदा ननु खलु त्वां कुपितेन राज्ञा पालकेन छेद्यमानं प्रेक्षिष्ये नववधूकेशकलापमिव ससुगन्धं।

(२) प्रसीदत्वार्य्यः; ननु आर्य्यस्यैव पारलौकिकोऽयमुपवासः अनुष्ठीयते इति।

(३) आर्य्ये; उत्तिष्ठ, उत्तिष्ठ; कथय कथय अत्र उपवासेकेन कार्य्यं।

(४) अस्मादृशजनयोग्येन ब्राह्मणेन उपनिमंत्रितेन।

(५) तेन हि गच्छत्वार्य्या; अहमपि अस्मादृशजनयोग्यं ब्राह्मणं उपनिमन्त्रयामि।

नटी। जं अज्जो आणवेदि ॥ इति निष्क्रान्ता (१)॥

सूत्र। ॥ परिक्रम्य॥ हीमाणहे! ता कधं मए एव्वं सुसमिद्धाए उज्जइणीए अह्मारिसजणजोग्गो बह्मणो अस्सेसिदव्वो ॥ विलोक्य ॥ एसो चारुदत्तस्स मित्तं मित्तेओ इदो जेव्व आअच्छदि; भोदु; पुच्छिस्सं दाव। अज्ज, मित्तेअ, अह्माणं गेहे असिदुं अग्गणी भोदु अज्जो (२)।

नेपथ्ये॥ भो अस्सं बह्मणं उवणिमन्तेदु भवं। वावडो दाणिं अहं (३)।

सूत्र। अज्ज सम्पसं भोअणं णीसवत्तस्स। अविअ दक्खिणा का वि दे भविस्सदि (४)।

---

(१) यत् आर्य्य आज्ञापयति।

(२) तस्मात् कथं मया ईदृश्यामुज्जयिन्यां समृद्धायां अस्मादृशजनयोग्यो ब्राह्मणोऽन्वेषितव्यः। एष चारुदत्तस्य मित्रं मैत्रेयः इतएव आगच्छति; भवतु प्रच्यामि तावत्। आर्य्य, मैत्रेय, अस्माकं गेहे अत्तुं अग्रणीर्भवतु आर्य्यः।

(३) भोः अन्यं ब्राह्मणं उपनिमन्त्रयतु भवान्। व्यापृतोऽहं इदानीं।

(४) आर्य्य सम्पन्नं भोजनं निस्सपत्नञ्च (विपक्षस्याभावात्) अपिच दक्षिणा कापि ते भविष्यति।

॥ पुनर्नेपथ्ये ॥ भो; जं दाणिं पटमं जेव्व पच्चादिट्ठोसि, ता को दाणिं दे णिव्वन्धोममोपदेसं अणुसन्धिदुं (१)।

सूत्र। पच्चादिट्ठोह्मि एदिणा। भोदु; अणं बह्मणं उव णिमन्तेमि (२)।

॥ इति निष्क्रान्तः ॥ आमुखं ॥

॥ प्रविश्य प्रावारहस्तोमैत्रेयः ॥

॥ अणं बह्मणमिति पूर्वोक्तं पठित्वा ॥ अध वा; मए मित्तेएण परस्स आमन्तणआइं भक्खिदव्वाइं। हा अवत्थे तुलीअसि, जो दाणिं अहं तत्थभवदो चारुदत्तस्स रिद्धीए अ होरत्तं पेरत्तसिद्धेहिं उग्गारसुरहिगन्धेहिं मोदएहिं जेव्व आसिदो अभ्भन्तरचदुस्सालअदुआरए उवविट्ठो मल्लकसद परिवुदो चित्तअरोविअ अङ्गुलीहिं छिविअ अवणेमि; णअ रचत्तरवुसहो विअ रोमन्थाअमाणो चिट्ठामि। सो दाणिं अहं तस्स दलिद्ददाए जहिं तहिं चरिअ गेहपारावदो विअ आवासणिमित्तं इध आअच्छामि। एसो अज्ज चारुदत्तस्स पिअवअस्सेण चुल्लवुड्ढेण जादीकुसुमवासिदोपावारओ अणु

(१) भो यत् इदानीं प्रत्यादिष्टोऽसि तत्कः इदानीं ते निर्ब्बन्धोममोपदेशं अनुसर्त्तुं।

(२) प्रत्यादिष्टोऽस्मि अनेन; भवतु; अन्यं ब्राह्मणं उप निमन्त्रयामि।

पेसिदो सिद्धीकिददेवकज्जस्स अज्जचारुदत्तस्स उवणेद व्वोत्ति । ता जाव अज्जचारुदत्तं पेक्खामि ॥ परिक्रम्याव लोक्य च॥ एसो चारुदत्तो सिद्धीकिददेवकज्जो गिहदेवदाणं वलिं करेन्तो इदो जेव्व आअच्छदि (१)।

॥ ततः प्रविशति यथानिर्दिष्टश्चारुदत्तः रदनिका च॥

चारु। ॥ ऊर्द्धमवलोक्य सनिर्व्वेदं निःश्वस्य ॥

यासां वलिः सपदि मद्गृहदेहलीनां,

हंसैश्च सारसगणैश्च विलुप्तपूर्व्वः;

(१) मया मैत्रेयेण परस्य आमन्त्रणानि भक्षितव्यानि; हा अवस्थे तुलयसि । यः इदानीमहन्तत्रभवतः चारुदत्तस्य ऋद्ध्या अहोरात्रप्रयत्नसिद्धैः उद्गारसुरभिगन्धिभिर्मोदकै रेवाशितः अभ्यन्तरचतुःशालकद्वारे उपविष्टः मल्लकशत परिवृतः चित्रकरइव अङ्गुलीभिः स्पृष्ट्वा अपनयामि। नगर चत्वरवृषभइव रोमन्थायमानः तिष्ठामि। सः इदानीं अहं तस्य दरिद्रतया यत्र कुत्रापि चरित्वा गेहपारावतइवावास निमित्तमत्रागच्छामि। एष चारुदत्तस्य प्रियवयस्येन चूर्ण वृद्धेन जातीकुसुमवासितोऽनुप्रेषितः प्रावारकः सिद्धीकृतदेव कार्य्यस्य आर्य्यचारुदत्तस्योपनेतव्यइति । तद्यावत् आर्य्य चारुदत्तं पश्यामि। एष चारुदत्तः सिद्धीकृतदेवकार्य्यः गृह देवतानां वलिं कुर्व्वन्नितएवागच्छति।

तास्वेव संप्रति विरूढतृणाङ्कुरासु,
वीजाञ्जलिः पतति कीटमुखावलीढः। ८॥

॥ मन्दं परिक्रम्योपविष्टः ॥

विदू। एसो अज्ज चारुदत्तो ता जाव सम्पदं उवसप्पामि ॥ उपसृत्य। सोत्थि भो दे ; वड्ढदु भवं (१)।

चारु। अये सर्व्वकालमित्रं मैत्रेयः प्राप्तः। सखे स्वागतमास्यतां।

विदू। जं भवं आणवेदि ॥ उपविश्य ॥ भो वअस्स ; एसो दे पिअवअस्सेण चुण्णवुड्ढेण जादीकुसुमवासिदो पावारओ अणुण्पेसिदो सिद्धीकिददेवकज्जस्स अज्जचारुदत्तस्स तुए उवणेदव्वोत्ति (२)॥ समर्पयति ॥

चारु। गृहीत्वा ॥ सचिन्तः स्थितः ॥

विदू। भो, इदं किं चिन्तीअदि (३)।

(१) एष आर्य्यचारुदत्तः तत् यावत् साम्प्रतं उपसर्पामि। स्वस्ति भवते; वर्द्धतां भवान्।

(२) यत् भवान् आज्ञापयति। भो वयस्य। एष ते प्रियवयस्येन चूर्णवृद्धेन जातीकुसुमवासितः प्रावारकः अनुप्रेषितः सिद्धीकृतदेवकार्य्यस्य आर्य्यचारुदत्तस्य त्वया उपनेतव्य इति।

(३) भो किं इदं चिन्त्यते।

चारु। वयस्य!

सुखं हि दुःखान्यनुभूय शोभते
घनान्धकारेष्विव दीपदर्शनं;
सुखात्तु योयाति नरो दरिद्रतां,
धृतः शरीरेण मृतः स जीवति ॥१०॥

विदू। भो वअस्स! मरणादो दालिद्दादो वा कदर रोअदि (१)।

चारु। वयस्य।

दारिद्र्यान्मरणाद्वा मरणं मम रोचते न दारिद्र्यम्;
अल्पक्लेशं मरणं, दारिद्र्यमनन्तकं दुःखम्।

विदू। भो वअस्स; अलं सन्तप्पिदेण; पणइजणसंक्कामिद विहवस्स सुरअणपीदसेसस्स विअ पडिवचंदस्स परिक्खओ वि दे अहिअदरं रमणीओ (२)।

चारु। वयस्य; न ममार्थान्प्रति दैन्यम्। पश्य।

एतत्तु मां दहति यद्गृहमस्मदीयं,
क्षीणार्थमित्यतिथयः परिवर्जयन्ति;

(१) भो वयस्य। मरणात् दारिद्र्याद्वा कतरत् रोचते।

(२) भो वयस्य; अलं सन्तापितेन प्रणयिजनसंक्रामित विभवस्य सुरजनपीतशेषस्य प्रतिपच्चन्द्रस्येव परिचयोऽपि ते अधिकतरं रमणीयः।

संशुष्कसान्द्रमदलेखमिव भ्रमन्तः
कालात्यये मधुकराः करिणः कपोलम्।१२॥

विदू। भो वअस्स; एदे क्खु दासीए पुत्ता अत्थकल्लवत्ता, वरडाभीदा विअ गोवालदारआ अरणे, जहिं जहिं ण खज्जंति तहिं तहिं गच्छंति (१)।

चारु। वयस्य;

सत्यं न मे विभवनाशकृतास्ति चिन्ता;
भाग्यक्रमेण हि धनानि भवन्ति यान्ति;
एतत्तु मां दहति नष्टधनाश्रयस्य,
यत्सौहृदादपि जनाः शिथिलीभवन्ति।१३॥

अपिच।

दारिद्र्याद्ध्रियमेति, ह्रीपरिगतः प्रभ्रश्यते तेजसो,
निस्तेजाः परिभूयते, परिभवान्निर्वेदमापद्यते;
निर्विणः शुचमेति, शोकपिहितोबुद्ध्या परित्यज्यते;
निर्बुद्धिः क्षयमेत्यहो निधनता सर्व्वापदामास्पदम्।१४॥

(१) एते खलु दासीपुत्राः अर्थकल्पप्रातराशाः वरटाभीताः इव गोपालदारका अरण्ये यत्र यत्र न खादन्ति तत्र तत्र गच्छन्ति।

विदू। भो वअस्स; तं जेव्व अत्थकल्लवत्तं सुमरिअ अलं सन्तप्पिदेण (१)।

चारु। वयस्य; दारिद्र्यं हि पुरुषस्य,

निवासश्चिन्तायाः परपरिभवोवैरमपरं,
जुगुप्सा मित्राणां, स्वजनजनविद्वेषकरणं,
वनं गन्तुं बुद्धिर्भवति च कलत्रात्परिभवो,
हृदिस्थः शोकाग्निर्न च दहति सन्तापयति च।

तद्वयस्य; कृतोमया गृहदेवताभ्यो बलिः; गच्छ त्वमपि चतुष्पथे मातृभ्योबलिमुपहर।

विदू। ण गमिस्सं (२)।

चारु। किमर्थम्।

विदू। जदो एव्वं पूइज्जन्ता, ण दे पसीदन्ति, ता को गुणो देवेसुं अच्चिदेसुं (३)।

(१) भो वयस्य; तमेव अर्थकल्यवर्त्तां स्मृत्वा अलं सन्तापितेन।

(२) न गमिष्यामि।

(३) यतएवं पूज्यमानाअपि न ते प्रसीदन्ति तत् कोगुणोऽर्चितेषु देवेषु।

चारु। वयस्य; मामैवम् गृहस्थस्य नित्योऽयं विधिः।

तपसा मनसा वाग्भिः पूजिता वलिकर्मभिः,
तुष्यन्ति शमिनां नित्यं देवताः किं विचारितैः। २४।

तद्गच्छ मातृभ्योवलिमुपहर।

विदू। भो ण गमिस्सं; अस्सो कोवि पउज्जीअदु। मम उण बह्मणस्स सव्वं जेव्व विपरीदं परिणमदि, आदंसगदा विअ च्छाआ, वामादो दक्खिणा, दक्खिणादो वामा। अस्सञ्च; एदाए पदोसवेलाए इध राअमग्गे गणिआ विडा चेडा राअवल्लहा अ पुरिसा सञ्चरन्ति। ता मण्डूकलुद्धस्स विअ कालसप्पस्स मूसिओ विअ अहिमुहावलिदो वज्झो दाणिं भविस्सं। तुमं इध उवविट्ठो किं करिस्ससि (१)।

(१) भो न गमिष्यामि; अन्यः कोऽपि प्रयुज्यतां। मम पुनर्ब्राह्मणस्य सर्व्वमेव विपरीतं परिणमति, आदर्शगता इव च्छाया, वामतो दक्षिणा, दक्षिणतो वामा। अन्यच्च; एतस्यां प्रदोषवेलायां इह राजमार्गे गणिकाविटाश्चेडाश्च राजवल्लभाः पुरुषाः सञ्चरन्ति, तस्मात् मण्डूकलुब्धस्येव कालसर्पस्य अहिमुखापतितोमूषकइव बध्यः इदानीं भविष्यामि। त्वं इह उपविष्टः किं करिष्यसि।

चारु। भवतु; तिष्ठ, तावदहं समाधिं निवर्त्तयामि।

नेपथ्ये ॥ तिष्ठ वसन्तसेने तिष्ठ तिष्ठ ॥

ततः प्रविशति विटशकारचेटैरनुगम्यमाना वसन्तसेना ॥

विटः। वसन्तसेने तिष्ठ तिष्ठ।

किं त्वं भयेन परिवर्त्तितसौकुमार्य्या,
नृत्यप्रयोगविशदौ चरणौ क्षिपन्ती,
उद्विग्नचञ्चलकटाक्षविसृष्टदृष्टि
र्व्याधानुसारचकिता हरिणीव यासि ॥१८॥

शकारः। चिट्ठ वसन्तशेणिए चिट्ठ।

किं याशि, धावशि, पलाअशि, पक्खलन्ती
वा शूपशीद, ण मलीहिशि, चिट्ठ दाव;
कामेण डज्झदि क्खु मे हलके तवश्शी
अङ्गाललाशिपडिदे विअ मंशखण्डे (१)। १९॥

(१) तिष्ठ वसन्तसेनिके तिष्ठ।

किं यासि, धावसि, पलायसे, प्रस्खलन्ती
वासु प्रसीद न मरिष्यसि, तिष्ठ तावत्।
कामेन दह्यते खलु मे हृदयं तपस्वि
अङ्गारराशिपतितं इव मांसखण्डं।

चेटः। अज्जए चिठ्ठ चिठ्ठ।

उत्ताशिता गच्छशि अन्तिका मे,
शंपुणपुच्छा विअ गिह्ममोरी;
ओवग्गदी शामिअ भट्टके मे,
वणे गडे कुक्कुडशावके व्व (१)।

विटः। वसन्तसेने तिष्ठ तिष्ठ।

किं यासि बालकदलीव विकम्पमाना,
रक्तांशुकं पवनलोलदशं वहन्ती;
रक्तोत्पलप्रकरकुड्मलमुत्सृजन्ती,
टङ्कैर्मनःशिलगुहेव विदार्य्यमाणा।

शकारः। चिठ्ठ वसन्तशेणिए चिठ्ठ।

मम मअणमणङ्गं वम्महं वड्ढअन्ती
णिशि अ शअणके मे णिद्दअं पक्खिवन्ती;

(१) आर्य्यके तिष्ठ तिष्ठ।

उत्त्रासिता गच्छसि अन्तिका मम
संपूर्णपुच्छेव ग्रीष्ममयूरी;
संभ्रममागच्छति स्वामी भट्टारको मम
वने गतः कुक्कुरशावकइव।

पशलशि भअभीदा पक्खलन्ती खलन्ती;
मम वशमणुजादा लावणश्शेव कुन्ती (१)। 19॥

विटः। वसन्तसेने।

किं त्वं पदैर्मम पदानि विशेषयन्ती
व्यालीव यासि पतगेन्द्रभयाभिभूता;
वेगादहं प्रविसृतः पवनं निरुन्ध्यां
त्वन्निग्रहे तु वरगात्रि न मे प्रयत्नः। 20॥

शकारः। भावे भावे।

एशा णाणकमूशिकामकशिका, मच्छाशिका, लाशिका;
णीशाशा, कुलणाशिका, अवशिका, कामाहमञ्जूशिका,
एशा वेशवहू, शुवेशणिलआ, वेशङ्गणा, वेशिआ;
एशे शे दशणामके मयि कले अज्जावि मं णेच्छदि (२)। 21

(१) तिष्ठ वसन्तसेने तिष्ठ।

मम मदनमनङ्गं मन्मथं वर्द्धयन्ती
निशि च शयनीये मे निर्द्रयं प्रक्षिपन्ती;
प्रसरसि भयभीता प्रस्खलन्ती स्खलन्ती।
मम वशमनुयाता रावणस्येव कुन्ती।

(२) शिवाङ्कटंकानाम्मोषिकामस्य ताड़नी, मत्स्यभक्षिका, नर्त्तकी, निम्ननासिका, वंशनाशिनी, अनायत्ता, कामस्य पात्रविशेषः। एषा वेशवधू वेशस्य वेश्याजनाश्रयस्य वधः

विटः। प्रसरसि भयविक्लवा किमर्थं
प्रचलितकुण्डलघृष्टगण्डपार्श्वा;
विटजननखघट्टितेव वीणा;
जलधरगर्जितभीतसारसीव। ॥२२॥

शकारः। झाणज्झणन्तबहुभूशणशद्दमिश्शं,
किं दोवदी विअ पलाअशि लामभीदा;
एशे हलामि शहशत्ति जधा हणूमे
विश्शावशुश्श बहिणिं विअ तं शुभद्दं (१) ॥२३॥

चेटः। लामेहि अ लाअवल्लहं?
तो, क्खाहिशि मच्छमंशकं;
एदेहिं मच्छमंशकेहिं,
शुणआ मलअं ण शेवन्ति (२)। ॥२४॥

---

सुवेशानां भूषणानां आश्रयः वेशोऽस्यास्तीति वेशिका; एतान्यस्या दश नामकानि मया कृतानि अद्यापि मां नेच्छति।

(१) झाणज्झणमिति बहुभूषणशब्दमिश्रं
• किं द्रौपदी इव पलायसे रामभीता;
एष हरामि झटिति यथा हनूमान्,
विश्वावसोर्भगिनीमिव तां सुभद्रां।

(२) रमय राजवल्लभञ्च;
ततः, खादिष्यसि मत्स्यमांसकं,
एताभ्यां मत्स्यमांसाभ्यां
कुक्कुरा मृतं न सेवन्ते।

विटः। भवति वसन्तसेने।

किं त्वं कटीतटनिवेशितमुद्वहन्ती
ताराविचित्ररुचिरं रशनाकलापम्;
वक्त्रेण निर्मथितचूर्णमनःशिलेन
त्रस्ताद्भुतं नगरदैवतवत्प्रयासि। ॥२८॥

शकारः। अह्मेहि चण्डं अहिशालिअन्ती
वणे शिआली विअ कुक्कुडेहिं;
पलाशि शिग्धं तुलिदं शवेग्गं
शवेढणं मे हलअं हलन्ती (१)। २७।

वसं। पल्लविए, पल्लविए; परहुदिए, परहुदिए (२)।

शकारः। ॥सभयम्॥ भावे, भावे; मणुश्शे, मणुश्शे (३)।

विटः। न भेतव्यम्, न भेतव्यम्।

वसं। माहविए, माहविए (४)।

---

(१) अस्माभिः शीघ्रं अभिसार्य्यमाणा
वने शृगालीव कुक्कुरैः।
पलायसे शीघ्रं त्वरितं सवेगं
समूलबन्धं मम हृदयं हरन्ती।

(२) पल्लविके, पल्लविके, परभृतिके परभृतिके।

(३) हे विद्वन्, हे विद्वन्, मनुष्या, मनुष्याः।

(४) माधविके, माधविके।

विटः। ॥ सहासम् ॥ मूर्ख; परिजनोऽन्विष्यते।

शकारः। भावे, भावे; इत्थिआमणेशदि (१)।

विटः। अथकिम्।

शकारः। इत्थिआणं शदं मोडेमि शूले हग्गे (२)।

वसं। ॥ शून्यमवलोक्य ॥ हद्धी, हद्धी; कधं परिअणोवि परिभट्टो; एत्थ मए अप्पा सअं जेव्व रक्खिदव्वो (३)।

विटः। अन्विष्यताम्।

शकारः। वशन्तशेणिए, विलव, विलव; परहुदिअं वा पल्लविअं वा, शव्वं वा वशन्तमाशं; मए अहिशालिअंतीं तुमं कोपलित्तादुश्शदि।

किं भीमशेणे जमदग्गपुत्ते,
कुन्तीशुदे वा, दशकन्धले वा।
एशे हगे गेह्निअ केशहत्थे
दुश्शाशणश्शाणुकिदिं कलेमि ॥१७॥

(१) विद्वन्, विद्वन्; स्त्रियमन्विच्छति।

(२) स्त्रीणां शतं हन्मि शूलेनाहं।

(३) हाधिक्, हाधिक्, कथं परिजनोऽपि परिभ्रष्टः; अत्र मयात्मा स्वयमेव रक्षितव्यः।

णं पेक्ख, णं पेक्ख ;

अशी शुतिक्खे वलिदे अ मस्तके

कप्पेध शीशं उश्र मालएध वा। २८

अलं तवेदेण पलाइदेण; मुमुक्खु जे होदि, ण शे क्खु जीअदि (१)।

(१) वसन्तसेनिके विलप विलप, परभृतिकां वा पल्लविकां वा, सर्व्वं वा वसन्तमासं, मया अभिसार्य्यमाणां त्वां कः परित्रा यिष्यते ।

किं भीमसेनोजमदग्निपुत्रः,

कुन्तीसुतोवा, दशकन्धरोवा।

एषोहं केशपाशं गृहीत्वा,

दुःशासनस्यानुकृतिं करोमि।

ननु प्रेचस्व, ननु प्रेचस्व ;

असिः सुतीक्ष्णः वलितश्च मस्तकं

छिनन्ति शीर्षं उत मारयामि वा।

अलं तवैतेन पलायितेन मुमूर्षुर्याभवति न स खलु जीवति।

वसं। अज्ज; अबला क्खु अहं (१)।

विटः। अत एव भ्रियसे।

शकारः। अदो जेव्व ण मालीअसि (२)।

वसं। ॥ स्वगतं॥ कधं, अणुणओ वि से भअमुप्पादेदि, भोदु एव्वं दाव ॥ प्रकाशं ॥ अज्ज, इमादो किंपि अलङ्करणं तक्कीअदि (३)।

विटः। शान्तं! भवति वसन्तसेने न पुष्पमोषमर्हत्युद्यान लता; तत्कृतमलङ्करणैः।

वसं। ता किं खु दाणिं (४)।

शकारः। हगे देवपुलिशे मणुश्शे वाशुदेवके कामइदव्वो (५)।

वसं। ॥ सक्रोधं॥सन्तं!सन्तं!अवेहि; अणज्जं मन्तेसि (६)।

(१) आर्य्य; अबला खल्वहं।

(२) अतएव न मार्य्यसे।

(३) कथं अनुनयोऽप्यस्य भयमुत्पादयति; भवत्वेवंतावत्। आर्य्य, अस्मात् किमपि अलङ्करणं तर्क्यते।

(४) तत्किं खलु इदानीं।

(५) अहं देवपुरुषः मनुष्यो वासुदेवः कामयितव्य

(६) शान्तं! शान्तं! अपेहि? अनार्य्यं मन्त्रयसि।

शकारः ॥ सहस्ततालं विहस्य ॥ भावे, भावे, पेक्खदाव; मं अन्तलेण शुशिणिद्धा एशा गणिआ दालिआ णं, जेण मं भणादि; एहि शन्तेशि किलिन्तेशित्ति। हगे ण गामन्तलं, ण णअलन्तलं वा, गडे; अज्जके, शवामि भावश्श शीशं अत्तणकेहिं पादेहिं, तव जेव्व पश्चाणुपश्चिआए आहिंडन्ते, शन्ते किलिन्तेह्मि शम्वुत्ते (१)।

विटः ॥ स्वगतम् ॥ अये, कथं श्रान्तमित्यभिहिते श्रान्त इत्यवगच्छति मूर्खः ॥ प्रकाशम् ॥ वसन्तसेने, वेशवासविरुद्धमभिहितं भवत्या, पश्य;

तरुणजनसहायश्चिन्त्यतां वेशवासो,
विगणय, गणिका त्वं, मार्गजाता लतेव।
वहसि हि धनहार्य्यं पण्यभूतं शरीरं,
सममुपचर, भद्रे, सुप्रियं चाप्रियञ्च। ॥२७॥

(१) विद्वन् विद्वन् प्रेक्षस्व तावत्; मां अन्तरेण सुस्निग्धा एषा गणिका दारिका ननु, येन मां भणति; एहि, श्रान्तोऽसि क्लान्तोऽसीति। अहं न ग्रामान्तरं, न नगरान्तरं वा, गतः। भट्टालिके, शपामि विटस्य शीर्षेण आत्मीयाभ्यां पादाभ्यां, तवैव पृष्ठानुपृष्ठिकया उद्भ्राम्यन् श्रान्तः क्लान्तोऽस्मि संवृत्तः।

अपिच।

वाप्यां स्नाति विचक्षणोद्विजवरोमूर्खोऽपि वर्णाधमः,
फुल्लां नाम्यति वायसोऽपि हि लतां या नामिता बर्हिणा;
ब्रह्मक्षत्रविशस्तरन्ति च यया नावा तयैवेतरे;
त्वं वापीव, लतेव, नौरिव, जनं वेश्यासि सर्व्वं भज।।२०।।

वसं। गुणो क्खु अणुराअस्स कारणं, ण उण वलक्कारो (१)।

शकारः। भावे, भावे; एशा गब्भदाशी कामदेवाअदणुज्जाणादो पऊदि, ताह दलिद्दचालुदत्ताह अणुलत्ता, ण मं कामेदि; वामदो तश्श घलं; जधा तव मम हत्थादो एशा ण पलिब्भंशदि तधा कलेदु भावे (२)।

विटः ॥स्वगतं॥ यदेव परिहर्त्तव्यं तदेवोदाहरति मूर्खः। कथं; वसन्तसेना आर्यचारुदत्तमनुरक्ता; सुष्ठु,

(१) गुणः खलु अनुरागस्य कारणं, न पुनर्व्वलात्कारः।

(२) एषा गर्भदासी कामदेवायतनोद्यानात् प्रभृति, तस्य दरिद्रचारुदत्तस्य अनुरक्ता, न मां कामयते; वामतस्तस्य गृहं; यथा तव मम हस्तात् न एषा प्रभ्रश्यति, तथा करोतु भावः।

खल्विदमुच्यते, रत्नं रत्नेन सङ्गच्छतइति; तद्गच्छतु, किमनेन मूर्खेण ॥ प्रकाशं॥ काणेलीमातः! वामतस्तस्य सार्थवाहस्य गृहं?

शकारः। अधइं; वामदो तश्श घळं (१)।

वसं ॥ स्वगतं ॥ अह्महे! वामदो तश्श घलं ति; जं सच्चं, अवरज्झन्तेण वि दुज्जणेण उवकिदं, जेण पिअसङ्गमं पाविदा (२)।

शकारः। भावे, भावे; बलिए क्खु अन्धआले, माषला शिपविट्ठाविअ मशिगुडिआ दीशन्दी जेव्व, पणट्ठा वशन्त शेणिआ (३)।

विटः। अहोबलवानन्धकारः। तथाहि।

आलोकविशाला मे सहसा तिमिरप्रवेशविच्छिन्ना;
उन्मीलितापि दृष्टिर्निमीलितेवान्धकारेण। ॥७१॥

अपिच।

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः,
असत्पुरुषसेवेव, दृष्टिर्विफलतां गता।

---

(१) वाढं; वामतस्तस्य गृहं।

(२) आश्चर्य्यं; वामतस्तस्य गृहमिति यत्सत्यं, अपराध्यतापि दुर्जनेन उपकृतं, येन प्रियसङ्गमं प्रापिता।

(३) भाव, भाव; बलवति अन्धकारे, माषराशिप्रविष्टेव मषीगुटिका दृश्यमानेव प्रणष्टा वसन्तसेना।

शकारः। भावे, भावे; अखेशामि वशन्तशेणिअं (१)।

विटः। कामिलोमातः! अस्ति किंचिक्तं यदुपलक्षयसि।

शकारः। भावे, भावे, किं विअ (२)।

विटः। भूषणशब्दं सौरभ्यानुविद्धं माल्यगन्धं वा।

शकारः। शुणामि मल्लगन्धं, अन्धआलपूलिदाए उण णाशिआए शुव्वंत्तं, उण ण पेक्खामि भूषणशद्दं (३)।

विटः ॥ जनान्तिकं॥ वसन्तसेने।

कामं प्रदोषतिमिरेण न दृश्यसे त्वं,
सौदामिनीव जलदोदरसन्धिलीना।
त्वां सूचयिष्यति तु माल्यसमुद्भवोऽयं;
गन्धश्च, भीरु, मुखराणि च नूपुराणि ।२८॥

श्रुतं, वसन्तसेने!

वसं ॥स्वगतं॥ सुदं, गहिदञ्च ॥ नाव्येन नूपुराणि उत्सार्य्य, माल्यानि चापनीय, किञ्चित्परिक्रम्य, हस्तेन परा

---

(१) भाव, भाव, अन्वेषयामि वसन्तसेनिकां।

(२) भाव, भाव, किमिव।

(३) शृणोमि माल्यगन्धं, अन्धकारपूरितया पुनर्नासिकया सुव्यक्तं, पुनर्न पश्यामि भूषणशब्दं।

मैत्र ॥ अम्मो! भित्तिपरामरिसश्रूइदं पक्खदुआरअं क्ख एदं; जाणामि अ सज्जोएण गेहस्स संवुदंपक्खदुआरअं (१)।

चारु। वयस्य समापजपोऽस्मि; तत्सांप्रतं गच्छ, मातृभ्यो वलिमुपहर।

विदू। भो ण गमिस्सं (२)।

चारु। धिक्कष्टं।

दारिद्र्यात्पुरुषस्य बान्धवजनोवाक्ये न सन्तिष्ठते;
सुस्निग्धा विमुखीभवन्ति सुहृदः स्फारीभवन्त्यापदः;
सत्त्वं ह्रासमुपैति, शीलशशिनः कान्तिः परिम्लायते,
पापं कर्म च यत्परैरपि कृतं, तत्तस्य सम्भाव्यते ॥ ३७ ॥

अपिच।

सङ्गं नैव हि कश्चिदस्य कुरुते, सम्भाष्यते नादरा
त्संप्राप्तोगृहमुत्सवेषु धनिनां सावज्ञमालोक्यते;
दूरादेव महाजनस्य विहरत्यल्पच्छदोलज्जया;
मन्ये, निर्धनता प्रकाममपरं षष्ठं महापातकं ॥ ३८ ॥

---

(१) आश्चर्यं; भित्तिपरामर्शसूचितं पक्षद्वारकं खल्वेतत्, जानामि च संयोगेन गेहस्य संवृतं पक्षद्वारकं।

(२) भो न गमिष्यामि।

अपिच।

दारिद्र्य! शोचामि भवन्तमेवमस्मच्छरीरे, सुहृदि, लुषित्वा;
विपन्नदेहे मयि मन्दभाग्ये, ममेति चिन्ता क गमिष्यसि त्वम्।

विदू ॥ सवैलक्ष्यं॥ भो, वअस्स; जइ मए गन्तव्वं, ता एसा वि मे सहाइणी रदणिआ भोदु (१)।

चारु। रदनिके; मैत्रेयमनुगच्छ।

चेटी। जं अज्जो आणवेदि (२)।

विदू। भोदि रदणिए; गेह्न बलिं, पदीवञ्च; अहं अवावुदं पक्खदुआरअं करेमि (३)॥ तथा करोति॥

वसं। मम अब्भुववत्तिणिमित्तं अवावुदं पक्खदुआरअं ता जाव पविसामि॥ दृष्ट्वा॥ हद्धी! हद्धी; कधं! पदीवो॥ पटान्तेन निर्वाप्य प्रविष्टा (४)॥

चारु। मैत्रेय, किमेतत्।

(१) भो, वयस्य; यदि मया गन्तव्यं, तस्मादेषापि मम सहायिनी रदनिका भवतु।

(२) यत् आर्य्य आज्ञापयति।

(३) भवति रदनिके, गृहाण बलिं, प्रदीपञ्च; अपावृतं पक्षद्वारकं करोमि।

(४) मम अभ्युपपत्तिनिमित्तं अपावृतं पक्षद्वारकं; तत् यावत् प्रविशामि। हा धिक्! हा धिक्! कथं, प्रदीपः।

विदू। अवावुदपक्खदुआरेण पिण्डीकदेण वादेण, णिव्वाविदो पदीवो। भोदि रदनिए, णिक्कम तुमं पक्खदुवारएण; अहंपि अब्भन्तरचदुस्सालादो पदीवं पज्जालिअ आअच्छामि (१)॥ इति निष्क्रान्तः॥

शकारः। भावे, भावे; अण्णेशामि वशन्तशेणिअं (२)।

विटः। अन्विष्यतां, अन्विष्यतां।

शकारः ॥तथा कृत्वा॥ भावे, भावे; गहिदा, गहिदा(३)।

विटः। मूर्ख; नन्वहं।

शकारः। इदो दाव भविअ एअन्ते भावे चिट्ठदु ॥पुनरन्विष्य चेटं गृहीत्वा॥ भावे, भावे; गहिदा, गहिदा (४)।

(१) अपावृतपक्षद्वारेण पिण्डीकृतेन वातेन, निर्व्वापितः प्रदीपः। भवति रदनिके, निष्क्रम त्वं पक्षद्वारकेण; अहमपि अभ्यन्तरचतुःशालके प्रदीपं प्रज्वाल्य आगच्छामि।

(२) भाव, भाव; अन्वेषयामि वसन्तसेनां।

(३) भाव, भाव; गृहीता, गृहीता।

(४) इतस्तावत् भूत्वा एकान्ते भावस्तिष्ठतु। भाव, भाव; गृहीता, गृहीता।

चेटः। भट्टके, चेडे हगे (१)।

शकारः। हदेोभावे, हदोचेडे; भावे चेडे, चेडे, भावे; तुह्मे दाव एअन्ते चिठ्ठ॥ पुनरन्विष्य रदनिकां केशेषु गृहीत्वा॥

भावे, शम्पदं गह्निदा वशन्तशेणिआ;
अन्धआले पलाअन्ती, मल्लगन्धेण शूइदा,
केशविन्दे पलामिट्ठा, चाणक्केणेव्व दोवदी (२)।

विटः। एषासि वयसोदर्पात्कुलपुत्रानुसारिणी,
केशेषु कुसुमाढ्येषु सेवितव्येषु कर्षिता।

शकारः। एशाशि वाशू शिरशि गहीदा।
केशेशु, वालेशु, शिलोलुहेशु,
अक्कोश, विक्कोश, लवाऽहिचण्डं,
शम्भुं, शिवं, शङ्कलमीशलं वा (३)।

---

(१) भट्टारक चेटोऽहं।

(२) हताभाव, हतश्चेटः; भावश्चेटः, चेटोभावः; युवां तावत् एकान्ते तिष्ठतं। भाव साम्प्रतं गृहीता वसन्तसेनिका।

अन्धकारे पलायमाना माल्यगन्धेन सूचिता,
केशवृन्दे परामृष्टा, चानक्येनेव द्रौपदी।

(३) एषासि वासू शिरसि गृहीता,
केशेषु, वालेषु, शिरोरुहेषु;
आक्रोश, विक्रोश, लपाधिचण्डं,
शम्भुं, शिवं, शङ्करमीश्वरं वा।

रद ॥ सभयं ॥ किं अज्जमिस्सेहिं ववसिदं (१)।

विटः। काणेलीमातः! अन्य एवैष स्वरयोगः।

शकारः। भावे, भावे; जधा दहिकुशिपलिलुद्धाए मज्जालीए शलपलिवत्ते होदि, तधा दाशीए शलपलिवत्ते कडे (२)।

विटः। कथं स्वरपरिवर्त्तः कृतः। अहो चित्रं। अथवा; किमत्र चित्रं।

इयं रङ्गप्रवेशेन, कलानां चोपशिक्षया,
वञ्चनापण्डितत्वेन, स्वरनैपुण्यमाश्रिता। 1801

॥ प्रविश्य विदूषकः ॥ ह्रीह्री! भोः, पदोसमन्दमारुदेण, पसुबन्धोवणीदस्स विअ, छागलस्स हिअअं, फुरफुराअदि पदीवो ॥ उपसृत्य रदनिकां, तथा दृष्ट्वा (३) ॥ भो रदणिए।

शकारः। भावे; मणुश्शे, मणुश्शे (४)।

(१) किं आर्य्यमिश्रैर्व्यवसितं।

(२) भाव, भाव; यथा दधिभक्तलुब्धायामार्जारिकायाः स्वरपरिवृत्तिर्भवति, तथा दास्याः स्वरपरिवृत्तिः कृता।

(३) आश्चर्य्यं! भोः, प्रदोषमन्दमारुतेन पशुबन्धोपनीतस्येव छागलस्य हृदयं, फुरफुरायते प्रदीपः। भो रदनिके।

(४) भाव, भाव, मनुष्यो; मनुष्यः।

विदू। जुत्तं णेदं; सरिसं णेदं; जं अज्जचारुदत्तस्स दलिद्ददाए सम्पदं परपुरिसा गेहं पवेसीअन्ति (१)।

रद। अज्ज मित्तेअ पेक्ख मे परिहवं (२)।

विदू। किं तव परिहवो। आदु अह्माणं (३)।

रद। णं तुह्माणं जेव्व (४)।

विदू। किं एसो बलक्कारो (५)।

रद। अधइं (६)।

विदू। सच्चं (७)।

रद। सच्चं (८)।

---

(१) युक्तं नेदं, सदृशं नेदं, यत् आर्य्यचारुदत्तस्य दरिद्रतया साम्प्रतं परपुरुषा गेहं प्रवेश्यन्ते।

(२) आर्य्य मैत्रेय, प्रेक्षस्व मे परिभवं।

(३) किन्तव परिभवः, अथवा अस्माकं।

(४) ननु युष्माकमेव।

(५) किमेष बलात्कारः।

(६) वाढं।

(७) सत्यं।

(८) सत्यं।

विदू ॥ सक्रोधं, दण्डकाष्ठमुद्यम्य ॥ मा दाव। भो; सके गेहे कुक्कुरोवि दाव चण्डा भोदि; किं उण अहं बह्मणो; ता एदिणा अह्मारिसजणभाअधेअकुडिलेण दण्डकट्ठेण, दुट्ठस्स विअ सुक्खाणवेणुअस्स, मत्थअं दे पहारेहिं कुट्टइस्सं(१)।

विटः। महाब्राह्मण! मर्षय, मर्षय।

विदू ॥विटं दृष्ट्वा॥ ण एत्थ एसो अवरज्झदि ॥शकारं दृष्ट्वा॥ एसो क्खु एत्थ अवरज्झदि। अरे, रे, राअसालअ संठाणअ, दुज्जण, दुम्मणुस्स; जुत्तं णेदं; जइ वि णाम तत्तभवं अज्जचालुदत्तो दलिद्दो सम्बुत्तो, ता किं तस्स गुणेहिं णा लङ्किदा उज्जइणी, जेण तस्स गेहं पविसिअ परिअणस्स ईदिसो उवमद्दो करीअदि।

मा दुग्गदोत्ति परिहवो णत्थि कअतंस्स दुग्गदो णाम;
चारित्तेण विहीणो अड्ढो विअ दुग्गदो होइ (२)। ॥४७॥

---

(१) मा तावत्; भोः; स्वके गेहे कुक्कुरोऽपि चण्डो भवति; किं पुनरहं ब्राह्मणः। तत एतेनास्मादृशजनभागधेय कुटिलेन दन्तकाष्ठेन दुष्टस्येव शुष्कवेणुकस्य मस्तकं ते प्रहारैः कुट्टयिष्यामि।

(२) नात्र एष अपराध्यति। एष खलु अत्रापराध्यति। अरे रे राजश्यालक, संस्थानक, दुर्जन, दुर्मनुष्य; युक्तं नेदं; यद्यपि नाम तत्रभवान् आर्य्यश्चारुदत्तोदरिद्रः संवृत्तः, तत् किं, तस्य गणैर्नालङ्कृता उज्जयिनी, येन तस्य गृहं प्रविश्य परिज

विटः ॥ सवैलक्ष्यं ॥ महाब्राह्मण! मर्षय, मर्षय। अन्यजन शङ्कया खल्विदमनुष्ठितं, न दर्पात्। पश्य। सकामान्विष्यते ऽस्माभिः।

विदू। किं इमं (१)।

विटः। शान्तं, पापं! काचित्स्वाधीनयौवना। सा नष्टा; शङ्कया तस्याः प्राप्तेयं शीलवञ्चना। सर्व्वथा इदमनुनय सर्व्वस्वं गृह्यतामिति ॥ खड्गमुत्सृज्य कृताञ्जलिः पादयोः पतति ॥

विदू। सप्पुरिस, उट्ठेहि, उट्ठेहि; अआणन्तेण मए तुमं उवालद्धे; सम्पदं उण जाणन्तो अणुणेमि (२)।

विटः। ननु भवानेवात्रानुनेयः तदुत्तिष्ठामि समयतः।

विदू। भणादु भवं (३)।

विटः। यदि इमं वृत्तान्तं चारुदत्तस्य नाख्यास्यसि।

---

नस्य ईदृश उपमर्द्दः क्रियते। मादुर्गतइति परिभवोनास्ति कृतान्तस्य दुर्गतोनाम, चारित्र्येण विहीन आढ्योऽपिच दुर्गतो भवति।

(१) किमिदं।

(२) सत्पुरुष; उत्तिष्ठ, उत्तिष्ठ। अजानता मया त्वमुपालब्धः साम्प्रतं पुनर्जानन्ननुनयामि।

(३) भणतु भवान्।

विदू। ण कधइस्सं (१)।

विटः। एष ते प्रणयो विप्र शिरसा धार्य्यते मया;
गुणशस्त्रैर्वयं येन शस्त्रवन्तोऽपि निर्ज्जिताः।४२॥

शकारः ॥सासूयं॥ किं णिमित्तं उण भावे, एदश्श दुट्ठवडुकश्श, विणयञ्जलिं कदुअ, पाएशु णिवडिदे (२)।

विटः। भीतोऽस्मि।

शकारः। कश्श तुमं भीदे (३)।

विटः। तस्य चारुदत्तस्य गुणेभ्यः।

शकारः। के विअ तश्श गुणा, जश्श गेहं पविशिअ अशि दव्वं पि णत्थि? (४)

विटः। मामैवं।
सोऽस्मद्विधानां प्रणयैः कृशीकृतो,
न तेन कश्चिद्विभवैर्विमानितः।
निदाघकालेष्विव सोदको ह्रदो,
नृणां स तृष्णामपनीय शुष्कवान्।|४७

(१) न कथयिष्यामि।

(२) किं निमित्तं पुनर्भाव, एतस्य दुष्टवटुकस्य, विनयाञ्जलिं कृत्वा, पादयोर्निपतितः।

(३) कस्मात् त्वं भीतः।

(४) के इव तस्य गुणा, यस्य गृहं प्रविश्य भोक्तव्यमपि नास्ति।

शकारः ॥ सामर्षम् ॥ के शे गब्भदाशे गब्भदाशीए
पुत्ते शूले विक्कन्ते? पण्डवे, शेदकेदू,
पुत्ते लाधाए, लावणे, इन्द उत्ते;
आहो कुन्तीए तेण लामेण जादे
अश्शत्थाम, धम्मपुत्ते, जडाऊ (१) ।४४।

विटः । मूर्ख; आर्य्यचारुदत्तः खल्वसौ ।
दीनानां कल्पवृक्षः स्वगुणफलनतः, सज्जनानां कुटुम्बी,
आदर्शः शिक्षितानां, सुचरितनिकषः, शीलवेलासमुद्रः,
सत्कर्त्ता, नावमन्ता, पुरुषगुणनिधि, र्दक्षिणोदारसत्त्वो,
ह्येकः श्लाघ्यः; स जीवत्यधिकगुणतया चोच्छ्वसन्तीव चान्ये। ।४५।
तदितो गच्छामः ।

शकारः । अगेण्हिअ वशन्तशेणिअं (२) ।

विटः । नष्टा वसन्तसेना ।

शकारः । कधं विअ (३) ।

---

(१) कः स गर्भदासो गर्भदास्याः पुत्रः शूरोविक्रान्तः पाण्डवः, श्वेतकेतुः, पुत्रोराधायाः, रावण, इन्द्रदत्तः, आहो कुन्त्यास्तेन रामेण जातः अश्वत्थामा धर्मपुत्रो जटायुः ।

(२) अगृहीत्वा वसन्तसेनां ।

(३) कथमिव ।

विटः। अन्धस्य दृष्टिरिव, पुष्टिरिवातुरस्य,
मूर्खस्य बुद्धिरिव, सिद्धिरिवालसस्य,
स्वल्पस्मृतेर्व्यसनिनः परमेव विद्या;
त्वां प्राप्य सा रतिरिवारिजने प्रनष्टा। |४६|

शकारः। अगेह्णिअ वसन्तसेणिअं ण गमिस्सं (१)।

विटः। एतदपि न श्रुतं त्वया।
आलाने गृह्यते हस्ती, वाजी वल्गासु गृह्यते,
हृदये गृह्यते नारी, यदिदं नास्ति गम्यतां। |४७|

शकारः। यदि गच्छसि, गच्छ तुमं; हगे ण गमिस्सं (२)।

विटः। एवं गच्छामि ॥ इति निष्क्रान्तः ॥

शकारः। गडे क्खु भावे अभावं ॥ विदूषकमुद्दिश्य ॥ अले काकपदशीशमस्तका दुट्ठबडुअका, उवविश, उवविश, (३)।

विदू। उववेसिदा जेव्व अह्मे (४)।

शकारः। केण (५)।

---

(१) अगृहीत्वा वसन्तसेनां न गमिष्यामि।

(२) यदि गच्छसि, गच्छ त्वं, अहं न गमिष्यामि।

(३) गतः खलु भावोऽदर्शनं।

(४) अरे काकपदशीर्षमस्तकादुष्टवटुका, उपविशत, उपविशत।

(५) उपविष्टा एव वयं।

विदू। कअन्तेण (१)।

शकारः। उट्ठेहि (२)।

विदू। उट्ठिस्सामो (३)।

शकारः। कदा (४)।

विदू। जदा पुणोवि देव्वमणुऊलं भविस्सदि (५)।

शकारः। अले लोद, लोद (६)।

विदू। रोदाविदा जेव्व अह्मे (७)।

शकारः। केण (८)।

विदू। दुग्गदीए (९)।

शकारः। अले हश, हश (१०)।

---

(१) केन।

(२) कृतान्तेन।

(३) उत्तिष्ठ।

(४) उत्थास्यामि।

(५) कदा।

(६) यदा पुनरपि दैवमनुकूलं भविष्यति।

(७) अरे रोदिहि, रोदिहि।

(८) रोदिता एवं वयं।

(९) केन।

(१०) अरे हस, हस।

विदू। हसिस्सामो (१)।

शकारः। कदा (२)।

विदू। पुणोवि ऋद्धीए चारुदत्तस्स (३)।

शकारः। अले, ले, दुट्ठबडुका; भणेशि मम वअणेण तं दलिद्दचारुदत्तकं। एशा शसुवण्णा, शहिलण्णा, णवणाडअ दंशणुट्ठिदा शुत्तधालिव्व, वशन्तशेणा णाम, गणिआ दालिआ, कामदेवाअदणुज्जाणादो पहुदि, तुमं अणुलत्ता, अह्मेहिं बलक्काराणुणीअमाणा, तुअ गेहं पविट्ठा; ता, जइ मम हत्थे शअं जेव्व पट्ठाविअ एणं शमप्पेशि, तदो अधिअलणे, ववहालं विणा, लहुं णिज्जादमाणाह तव, मए अणुबद्धा पीदी हुविश्शदि; आदु, अणिज्जादमाणाह, आमलणन्तिके वेले हुविश्शदि। अविअ, पेक्ख, पेक्ख।

कक्कालुका गोब्भलित्तवेण्टा,
शाके अ शुक्खे तलिदे हु मंशे,
भत्ते अ हेमन्तिअलत्तिशिद्धे,
लीणे अ वेले ण हु होदि पूदी।

शोट्ठिकं भणेशि, लहुकं भणेशि; तधा भणेशि, जधा हग्गे

(१) हसिष्यामः।

(२) कदा।

(३) पुनरपि ऋद्ध्या चारुदत्तस्य।

अत्तणो केलिकाए पाशादबालग्गकवोदवाडिआए उवविट्ठे, शुणामि; अस्सधा, जदि ण भणेशि, ता कवालतलपविट्ठ कवित्थगुडिअं विअ मत्थअं दे मडमडाइश्शं (१)।

---

(१) अरे, रे, दुष्टवटुक, भणिष्यसि मम वचनेन तं दरिद्र चारुदत्तं। एषा ससुवर्णा, सहिरण्या, नवनाटकदर्शनोत्थिता सूत्रधारिणीव, वसन्तसेना, गणिका दारिका, कामदेवायतनो द्यानात् प्रभृति, त्वामनुरक्ता अस्माभिर्बलात्कारानुनीयमाना तव गेहं प्रविष्टा; तद्यदि मम हस्ते स्वयमेव प्रस्थाप्य एनां समर्पयसि, ततोऽधिकरणे, व्यवहारं विना, शीघ्रं निर्य्यातयत स्तव मयानुबद्धा प्रीतिर्भविष्यति। अथवा, अनिर्यातयत आम रणान्तिकं वैरं भविष्यति। अपिच प्रेचस्व, प्रेचस्व।

कुष्माण्डीगोमयलिप्तवृन्ताशाकञ्च,
शुष्कं तलितं खलु मांसं;
भक्तञ्च हैमन्तिकरात्रिसिद्धं,
लीनायाञ्च वेलायां न खलु भवति पूतिः।

शोभनं भणिष्यसि, लघुकं भणिष्यसि, तथा भणिष्यसि यथा हमात्मनः केलिकायां प्रासादवालाग्रकपोतपालिकायामुप विष्टः शृणोमि। अन्यथा, यदि न भणसि, तदा कपाटतल प्रविष्टं कपित्थगुलिकमिव मस्तकन्ते मडमडदिति शब्दं कृत्वा भञ्जयिष्यामि।

विदू। भणिस्सं (१)।

शकारः ॥ अपवार्य्य॥ चेडे, गडे शच्चकं जेव्व भावे (२)।

चेटः। अधइं (३)।

शकारः। ता शिग्घं अवक्कमह्म (४)।

चेटः। ता गेह्ण भट्टके अशिं (५)।

शकारः। तव ज्जेव्व हत्थे चिट्ठदु (६)।

चेटः। एशे भट्टारहके गेह्णदु णं भट्टके अशिं (७)।

शकारः ॥ विपरीतङ्गृहीत्वा ॥

णिव्वक्कलं मूलकपेशिवस्सं,

खन्धेण घेत्तूण अ काशमुत्तं;

---

(१) भणिष्यामि।

(२) हे चेट, गतः सत्यमेव भावः।

(३) वाढं।

(४) तत् शीघ्रमपक्रामावः।

(५) तत् गृह्णातु भट्टारकोऽसिं।

(६) तवैव हस्ते तिष्ठतु।

(७) एष भट्टारकस्वामिकः गृह्णालेनं भट्टारकोऽसिं।

कुक्केहिं कुक्कीहिं अ वुक्कअन्ते,
जधा शिआले, शलणं पलामि (१)।

॥ परिक्रम्य निष्क्रान्तौ ॥

विदू। भोदि रदणिए, ण ह दे अअं अवमाणो तत्थ भवदो चारुदत्तस्स णिवेददव्वो; दोग्गच्चपीडिअस्स मणे दि उणदरा पीडा हुविस्सदि (२)।

रदनिका। अज्ज मित्तेअ; रअणिआ क्खु अहं सञ्जद मुही (३)।

विदू। एवं णेदं (४)।

चारु ॥ वसन्तसेनामुद्दिश्य॥ रदनिके, मारुताभिलाषी प्रदोषसमयशीतार्त्तो रोहसेनः। ततः प्रवेश्यतामभ्यन्तर मयं। अनेन प्रावारकेण छादयैनम्॥ इति प्रावारकमर्पयति॥

(१) निर्व्वल्कलं मूललग्नवर्णं
स्कन्धेन गृहीत्वा च कोषसन्नं।
कुक्कुरैः कुक्कुरीभिश्च शब्दायमानो,
यथा शृगालः, शरणं प्रयामि।

(२) भो रदनिके, न खलु ते अयं अपमानः तत्रभवत श्चारुदत्तस्य निवेदयितव्यः; दौर्गत्यपीडितस्य मन्ये द्विगुण तरा पीडा भविष्यति।

(३) आर्य्य मैत्रेय, रदनिका खल्वहं संयतमुखी।

(४) एवमेव।

वसं ॥ स्वगतं ॥ कधं परिजणोत्ति मं अवगच्छदि ॥ प्रावारकङ्गृहीत्वा समाघ्राय च ॥ स्वगतं ॥ सस्पृहं ॥ अम्महे जादीकुसुमवासिदो पावारओ, अणुदासीणं से जोव्वणं पडिहासेदि (१)।

॥ अपवारितकेन प्रावृणोति ॥

चारु। ननु रदनिके, रोहसेनं गृहीत्वाभ्यन्तरं प्रविश।

वसं ॥ स्वगतं॥ मन्दभाइणी क्खु अहं तुम्र अभन्तरस्स (२)।

चारु। ननु रदनिके प्रतिवचनमपि नास्ति। कष्टं।

यदा तु भाग्यक्षयपीडितान्दशां
नरः कृतान्तोपहितां प्रपद्यते;
तदास्य मित्राण्यपि यान्त्यमित्रतां,
चिरानुरक्तोऽपि विरज्यते जनः। (८७)।

॥ उपसृत्य रदनिका विदूषकश्च ॥

विदू। भो इअं सा रअणिआ (३)।

(१) कथं परिजनइति मामवगच्छति। आश्चर्य्यं! जातीकुसुमवासितः प्रावारकः; अनुदासीनं अस्य यौवनं प्रतिभासते।

(२) मन्दभागिनी खल्वहं तवाभ्यन्तरस्य।

(३) भो इयं सा रदनिका।

चारु। इयं सा रदनिका ; इयमपरा का,

अविज्ञातावसक्तेन दूषिता मम वाससा।

वसं ॥ स्वगतं ॥ णं; भूसिदा (१)।

चारु। छादिता शरदभ्रेण चन्द्रलेखेव दृश्यते। अथवा, न युक्तं परकलत्रदर्शनं।

विदू। भो, अलं परकलत्तदंसणसङ्काए ; एसा वसन्तसेणा कामदेवाअदनुज्जाणादो पहुदि भवन्तमणुरत्ता (२)।

चारु। अये, इयं वसन्तसेना ॥ स्वगतं॥

यया मे जनितः कामः क्षीणे विभवविस्तरे,

क्रोधः कुपुरुषस्येव स्वगात्रेष्वेव सीदति।

विदू। भो वअस्स। एसो क्खु राअसालो भणादि (३)।

चारु। किं।

विदू। एसा ससुवसा, सहिलसा, णवणाडअदंसणुट्ठिदा सुत्तधालिव्व वसन्तसेणा णाम, गणिआ दालिआ, कामदेवा

(१) ननु भूषिता।

(२) भो, अलं परकलत्रदर्शनशङ्कया; एषा वसन्तसेना, कामदेवायतनोद्यानात्प्रभृति त्वामनुरक्ता।

(३) भोवयस्य एष खलु राजश्यालो भणति।

अदणुज्जाणादो पञ्जदि तुमं अणुलत्ता, अह्मेहिं बलक्कारा णुणीअमाणा तुह गेहं पविट्ठा (१)।

वसं ॥ स्वगतं॥ बलक्काराणुणीअमाणेत्ति, जं सच्चं; अलं किदह्मि एदेहिं अक्खरेहिं (२)।

विदू। ता जइ मम हत्थे सअं जेव्व पट्ठाविअ एणं समप्पेसि, ता अधिअरणे ववहारं विणा लङ्कअं णिज्जादमाणाह्न तव मए अणुबद्धा पीदी ऊविस्सदि; अण्णधा, आमलणं वेलं ऊविस्सदि (३)।

चारु ॥ सावज्ञं॥ अज्ञोऽसौ॥ स्वगतं॥ अये कथन्देवतोपस्थानयोग्या युवतिरियं। तेन खलु तस्यां वेलायां –

प्रविश गृहमिति प्रतोद्यमाना
न चलति भाग्यकृतान्दशामवेक्ष्य।
पुरुषपरिचयेन च प्रगल्भं
न वदति यद्यपि भाषते बहूनि।

॥ प्रकाशं॥ भवति वसन्तसेने, अनेनाविज्ञानादपरिज्ञातपरिजनोपचारेणापराद्धोऽस्मि, शिरसा भवतीमनुनयामि।

(१) एषा ससुवर्णेति।

(२) बलात्कारानुनीयमानादिति, यत्सत्यं, अलङ्कृतास्मि एतैरक्षरैः।

(३) तद्यदि मम हस्ते स्वयमेव प्रस्थाप्य एनां समर्पयसीति।

वसं। एदिणा अणुचिदभूमिआरोहणेणावरज्झा अज्जं सीसेण पणमिअ पसादेमि (१)।

विदू। भो, दुवेवि तुम्हे सुखं पणमिअ, कलमकेदारा अणोणं सीसेण सीसं समाअदा, अहंपि इमिणा करहजाणुसरिसेण सीसेण, दुवेवि तुम्हे पसादेमि, उट्ठेधत्ति (२)।

चारु। भवतु, तिष्ठतु प्रणयः।

वसं ॥स्वगतं॥ चदुरो मधुरोअ अअं उवणासो; ण जुत्तं अज्ज ईदिसेण इध आअदाए, मए पडिवसिदुं; भोदु, एव्वं दाव भणिस्सं॥ प्रकाशं॥ अज्ज, जइ एव्वं अहं अज्जस्स अणुगेज्झा, ता इच्छे अहं इमं अलंकारअं अज्जस्स गेहे णिक्खिविदुं; अलङ्कारस्स णिमित्तं एदे पावा अणुसरन्ति (३)।

---

(१) एतेनानुचितभूमिकारोहणेनापराद्धा, आर्य्यं शीर्षेण प्रणम्य, प्रसादयामि।

(२) भो, द्वावपि युवां सुखं प्रणम्य, कलमकेदारौ अन्योन्यं शीर्षेण शीर्षं समागतौ; अहमपि अमुना करभजानुसदृशेन शीर्षेण, द्वावपि युवां प्रसादयामि, उत्तिष्ठतमिति।

(३) चतुरोमधुरः अयं उपन्यासः न युक्तं अद्य ईदृशेन इह आगतया मया प्रतिवसितुं; भवतु, एवं तावत् भणिष्ये। आर्य्य, यदि एवं अहं आर्य्यस्य अनुग्रहवती, तदिच्छामि अहं, इमं अलङ्कारकं आर्य्यस्य गेहे निक्षेप्तुं; अलङ्कारस्य निमित्तं एते पापा अनुसरन्ति।

चारु। अयोग्यमिदं न्यासस्य गृहम्।

वसं। अज्ज, अलिअं; पुरुसेसु णासा णिक्खिविअन्ति, ण उण गेहेसु (१)।

चारु। मैत्रेय, गृह्यतामयमलङ्कारः।

वसं। अणुगहिदह्मि (२)॥ इत्यलङ्कारानर्पयति॥

विदू ॥ गृहीत्वा॥ सोत्थि भोदीए (३)।

चारु। धिङ्मूर्ख; न्यासः खल्वयं।

विदू ॥ अपवार्य्य॥ जइ एव्वं ता चोरेहिं अवहरीअदुत्ति (४)।

चारु। अचिरेणैव कालेन।

विदू। एसो से अह्माणं विसासो (५)।

चारु। निर्यातयिष्ये।

(१) आर्य्य, अलीकं; पुरुषेषु न्यासानिःक्षिप्यन्ते न पुनर्गेहेषु।

(२) अनुगृहीतास्मि।

(३) स्वस्ति भवत्यै।

(४) यद्येवं तदा चौरैरपह्रियतामिति।

(५) एषोऽस्या अस्माकं विन्यासः।

वसं। अज्ज, इच्छे अहं, इमिणा अज्जेण अणुगच्छिअन्ती, सकं गेहं गन्तुं (१)।

चारु। मैत्रेय, अनुगच्छ तत्र भवतीं।

विदू। तुमं जेव्व एदं कलहंसगामिणीमणुगच्छन्तो राअहंसो विअ सोहसि; अहं उण बह्मणो; जहिं तहिं जणेहिं चउप्पहोवणीदो विअ उवहारो कुक्कुरेहिं विअ, खज्जमाणो विवज्जिस्सं (२)।

चारु। एवं भवतु; स्वयमेवानुगच्छामि तत्र भवतीं। तद्राजमार्गविश्वासयोग्याः प्रज्वाल्यन्तां प्रदीपिकाः।

विदू। वड्ढमाणअ, पज्जालेहि पदीविआओ (३)।

चेटः ॥ जनान्तिकं॥ अले, तेल्लेण विणा, पदीविआओ पज्जालीयन्ति? (४)।

(१) आर्य्य, इच्छाम्यहं, अनेन आर्य्येण अनुगम्यमाना, स्वकं गेहं गन्तुं।

(२) त्वमेव एतां कलहंसगामिनीं अनुगच्छन् राजहंस इव शोभसे; अहं पुनर्ब्राह्मणः; यत्र तत्र जनैश्चतुष्पथोपनीत इव उपहारः कुक्कुरैरिव खाद्यमानः विपत्स्ये।

(३) वर्द्धमानक, प्रज्वालय प्रदीपिकाः।

(४) अरे, तैलेन विना, प्रदीपिकाः प्रज्वाल्यन्ते?

विदू ॥ जनान्तिकं ॥ भो, ताओ क्खु अह्माणं पदीविआओ, अवमाणिदनिद्धणकामुआ विअ गणिआ, णिस्सिणेहाओ दाणिं संवुत्ता (१)।

चारु। मैत्रेय, भवतु; कृतं प्रदीपिकाभिः। पश्य।

उदयति हि शशाङ्कः कामिनीगण्डपाण्डु
र्ग्रहगणपरिवारो राजमार्गप्रदीपः;
तिमिरनिकरमध्ये रश्मयो यस्य गौराः,
स्रुतजल इव पङ्के, क्षीरधाराः पतन्ति।

॥ सानुरागं ॥ भवति वसन्तसेने, इदं भवत्या गृहं, प्रविशतु भवती ॥ वसन्तसेना सानुरागमवलोकयन्ती निष्क्रान्ता ॥

चारु। वयस्य गता वसन्तसेना; तदेहि, गृहमेव गच्छावः।

राजमार्गो हि शून्योऽयं, रक्षिणः सञ्चरन्ति च,
वञ्चना परिहर्त्तव्या बहुदोषा हि शर्व्वरी।

॥ परिक्रम्य ॥ इदञ्च सुवर्णभाण्डं रक्षितव्यं त्वया रात्रौ; वर्द्धमानकेनापि दिवा।

विदू। जधा भवं आणवेदि (२)।

॥ इति निष्क्रान्तौ ॥

इति मृच्छकटिके अलङ्कारन्यासोनाम प्रथमोऽङ्कः॥

---

(१) भो, ताः खलु अस्माकं प्रदीपिका, अवमानितनिर्द्धन कामुकादिव गणिका, निःस्नेहा इदानीं संवृत्ताः।

(२) यथा भवान् आज्ञापयति।

## ॥ अथ द्वितीयोऽङ्कः ॥

॥ प्रविश्य चेटी ॥ अत्ताए अज्जआसआसं सन्देसेण पेसि दह्मि; ता जाव पविसिअ अज्जआसआसं गच्छामि ॥ परिक्रम्यावलोक्य च ॥ एसा अज्जआ, हिअएण किंपि आलिहन्ती चिट्ठदि; ता जाव उपसप्पामि, (१)।

॥ ततः प्रविशति आसनस्था सोत्कण्ठा वसन्तसेना मदनिका च ॥

वसं। हञ्जे, तदो, तदो (२)।

चेटी। अज्जए, ण किंपि मन्तेसि; किं तदो, तदो (३)।

वसं। किं मए भणिदे (४)।

(१) मात्रा आर्य्यायाः सकाशं सन्देशेन प्रेरितास्मि; तत् यावत् प्रविश्य आर्य्यासकाशं गच्छामि। एषा आर्य्या, हृदयेन किमप्यालिखन्ती तिष्ठति। तत् यावत् उपसर्पामि।

(२) हे चेटि, ततस्ततः।

(३) न किमपि मन्त्रयसि; किन्ततः ततः।

(४) किं मया भणितं।

चेटी। तदो तदोत्ति (१)।

वसं ॥ सभ्रूक्षेपं ॥ श्रां एवं (२)।

॥ उपसृत्य प्रथमा चेटी ॥ श्रज्जए, श्रत्ता श्रादिसदि, णाहादा भविश्र, देवदाणं पूश्रं णिव्वत्तेहित्ति (३)।

वसं। हञ्जे, विष्णवेहि श्रत्तं, श्रज्ज ण णहाइस्सं, ता बह्मणो जेव्व पूश्रं निव्वत्तेदुत्ति (४)।

चेटी। जं श्रज्जश्रा श्राणवेदि (५) ॥ इति निष्क्रान्ता ॥

मद। श्रज्जए, सिणेहो पुच्छीश्रदि, ण पुरोभाइदा किं णेदं (६)।

वसं। मदणिए, कीदिसिं मं पेक्खसि (७)।

(१) ततस्ततइति।

(२) श्रां एवं।

(३) श्रार्य्ये, माता श्रादिशति, स्नाता भूत्वा, देवतानां पूजां निवर्त्तयेति।

(४) चेटि, विज्ञापय मातरं, श्रद्य न स्नास्यामि, तत् ब्राह्मणएव पूजां निवर्त्तयत्विति।

(५) यत् श्रार्य्या श्राज्ञापयति।

(६) श्रार्य्ये, स्नेहः पृच्छ्यते, न पुरोभागिता किं नेदं।

(७) मदनिके, कीदृशीं मां प्रेक्षसे।

चेटी। अज्जआए सुण्णहिअअत्तणेण, जाणामि, हिअअ गदं कंपि, अज्जआ अहिलसदित्ति (१)।

वसं। सुट्ठु तुए जाणिदं; परहिअअग्गहणपण्डिआ मदणिआ क्खु तुमं (२)।

मद। पिअं मे, पिअं, कामो क्खु णाम एसो भअवं अनुगहिदो महूसवो तरुणजणस्स; ता कधेदु अज्जआ, किं, राआ, राअवल्लहो वा, सेवीअदि (३)।

वसं। हञ्जे, रमिदुमिच्छामि, ण सेविदुं (४)।

मद। विज्जाविसेसालङ्किदो किं कोपि बह्मणो जुवा कामीअदि (५)।

वसं। पूअणीओ मे बह्मणो जणो (६)।

---

(१) आर्य्यायाः शून्यहृदयत्वेन जानामि, हृदयगतं कमपि, आर्य्याभिलषतीति।

(२) सुष्ठु त्वया ज्ञातं; परहृदयग्रहणपण्डिता मदनिका खलु त्वं।

(३) प्रियं मे, प्रियं, कामः खलु नाम एष भगवान् अनुगृहीतोमहोत्सवः तरुणजनस्य; तत्कथयतु आर्य्या, किं, राजा, राजवल्लभोवा सेव्यते।

(४) चेटि, रन्तुमिच्छामि न सेवितुं।

(५) विद्याविशेषालङ्कृतः किं कोऽपि ब्राह्मणो युवा काम्यते।

(६) पूजनीयोमे ब्राह्मणोजनः।

मद। किं, अणेअणअराभिगमणजणिदविहववित्थारो वाणिअजुआ वा कामीअदि (१)।

वसं। हञ्जे, उआरूढसिणेहं पि पणदूजणं परिचइअ, देसंतरगमणेण वाणिअजणो महन्तं विओअजं दुक्खमुप्पादेदि (२)।

मद। अज्जए, ण राजा, ण राअवल्लहो, ण बह्मणो, ण वाणिअजनो; ता को दाणिं सो भट्टिदारिआए कामीअदि (३)।

वसं। हञ्जे, तुमं मए सह कामदेवाअदणुज्जाणं गदा आसि (४)।

चेटी। अज्जए गदह्मि (५)।

---

(१) किं, अनेकनगराभिगमनजनितविभवविस्तरोवाणिजयुवा वा काम्यते।

(२) चेटि, उपारूढस्नेहं अपि प्रणयिजनं परिचर्य्य, देशान्तरगमनेन वाणिजजनोमहद्वियोगजदुःखमुत्पादयति।

(३) आर्य्ये, न राजा, न राजवल्लभो, न ब्राह्मणो, न वाणिजजनः, तत्कइदानीं स भर्तृदारिकया काम्यते।

(४) चेटि, त्वं मया सह कामदेवायतनोद्यानं गता आसीः।

(५) आर्य्ये, गतास्मि।

वसं। तधा वि मं उदासीणा विश्र पुच्छसि (१)।

मद। जाणिदं; किं, सो जेव्व, जेण अज्जआ सरणाअदा अब्भुववसा (२)।

वसं। किं णामहेओ क्खु सो (३)।

मद। सो क्खु सेट्ठिचत्तरे पडिवसदि (४)।

वसं। अइ, णामं से पुच्छिदासि (५)

मद। सो क्खु, अज्जए, सुगहिदणामहेओ अज्जचारुदत्तो णाम (६)।

वसं॥ सहर्षं॥ साऊ, मदणिए साऊ, सुट्ठु तुए जाणिदं (७)।

मद ॥ स्वगतं॥ एव्वं दाव॥ प्रकाशं॥ अज्जए, दलिद्दो क्खु सो सुणीअदि (८)।

---

(१) तथापि मां उदासीनेव पृच्छसि।

(२) ज्ञातं; किं, स एव येनार्य्याशरणागता अभ्युपपन्ना।

(३) किन्नामधेयः खलु सः।

(४) स खलु श्रेष्ठिचत्वरे प्रतिवसति।

(५) अयि, नामास्य पृष्टासि।

(६) स खलु, आर्य्ये, सुगृहीतनामधेयः आर्य्यचारुदत्तो नाम।

(७) साधु, मदनिके, साधु; सुष्ठु त्वया ज्ञातं।

(८) एवं तावत्। आर्य्ये, दरिद्रः खलु स श्रूयते।

वसं। अदोजेव्व कामीअदि; दलिद्दपुरिससङ्कंतमणा क्खु गणिआ लोए अवअणीआ भोदि (१)।

मद। अज्जए, किं झीणकुसुमं सहआरपादवं मङ्अरीओ उण सेवन्ति? (२)।

वसं। अदोजेव्व ताओ मङ्अरीओ वुच्चन्ति (३)।

मद। अज्जए, जइ सो मणीसिदो ता कीस दाणिं सहसा णाहिसारीअदि (४)।

वसं। हञ्जे, सहसा अहिसारिअन्तो पच्चुअआरदुव्वल दाए, मा दाव जणो दुल्लहदंसणो पुणो भविस्सदि (५)।

(१) अतएव काम्यते; दरिद्रपुरुषसंक्रान्तमनाः खलु गणिका लोके अवचनीया भवति।

(२) आर्य्ये, किं हीनकुसुमं सहकारपादपं मधुकर्य्यः पुनः सेवन्ते।

(३) अतएव ता मधुकर्य्य उच्यन्ते।

(४) आर्य्ये, यदि स मनीषितस्तत् किमर्थमिदानीं सहसा नाभिसार्य्यते।

(५) चेटि, सहसा अभिसार्य्यमाणः प्रत्युपकारदुर्व्वल तया, मा तावत् जनो दुर्ल्लभदर्शनः पुनर्भविष्यति।

मद। किं, अदोजेव्व सो अलङ्कारओ तस्स हत्थे णिक्खित्तो (१)।

वसं। हञ्जे, सुट्ठु दे जाणिदं (२)।

॥ नेपथ्ये॥ अरे भट्टा, दश सुवण्णाह लुद्धु, जूदकर, पप लीणु, पपलीणु, ता गेह्ण, गेह्ण, तिष्ठ, दूरात्प्रदृष्टोऽसि (३)।

॥ प्रविश्य अपटाक्षेपेण संभ्रान्तः सम्वाहकः॥

कष्टे! एशे जूदिअल, भावे; हीमाणहे, णवबन्धणमुक्काए विअ गद्दहीए हा ताडिदोम्हि गद्दहीए, अङ्गलाअ मुक्काए शत्तीए घडुक्को विअ घादिदोम्हि शत्तीए।

लेखअवावडहिअअं शहिअं दट्ठूण झत्ति पब्भट्ठे।

एह्निं मग्गणिवडिदे, कं णु क्खु शलणं पवज्जामि।

ता जाव एदे शहिअ जूदिअला अख्णदो मं अख्णेशन्ति ताव इदो विपडीदेहिं पादेहिं एदं शुण्णदेउलं पविशिअ, देवी भविश्शं (४)।

(१) किं अतएव सोऽलङ्कारस्तस्य हस्ते निक्षिप्तः।

(२) चेटि, सुष्ठु त्वया ज्ञातं।

(३) अरे भट्टारक, दशसुवर्णस्य कृते रुद्धः द्यूतकरः प्रपलायितः, तद्गृहाण, गृहाण; तिष्ठ; दूरात् प्रदृष्टोऽसि।

(४) कष्टं! एष द्यूतकर, भावः; आश्चर्य्यं, नवबन्धनमुक्तया इव गर्द्दभ्या हा ताडितोऽस्मि गर्द्दभ्या, अङ्गराजमुक्तया शक्त्या घटोत्कच इव घातितोऽस्मि शक्त्या।

॥ वज्रविधं नाट्यं कृत्वा तथा स्थितः; ततः प्रविशति माथुरोद्यूतकरश्च ॥

माथुरः। अले भट्टा, दश शुवख्राह लुद्धु जूदकरु पपलीणु, गेह्न; तिष्ठ, तिष्ठ, दूरात्प्रदृष्टोऽसि (१)।

द्यूत। जइ वज्जसि पाआलं, इन्दं सलणं च सम्पदं जासि,

सहिअं वज्जिअ एक्कं, रुद्दो वि ण रक्खिदुं तरइ(२)।

लेखकव्यापृतहृदयं सभिकं दृष्ट्वा झटिति प्रभ्रष्टः

इदानीं मार्गनिपतितः कं नु खलु शरणं प्रव्रजामि।

तत् यावत् एतौ सभिकद्यूतकरौ अन्यतोमां अन्विष्यतः, तावत् इतोविपरीताभ्यां पादाभ्यां एतत् शून्यं देवकुलं प्रविश्य, देवीभविष्यामि।

(१) अरे भट्टा, दशसुवर्णस्य कृते रुद्धः द्यूतकरः अपलायितः; गृहाण; तिष्ठ, तिष्ठ, दूरात् प्रदृष्टोऽसि।

(२) यदि व्रजसि पातालं, इन्द्रं शरणञ्च साम्प्रतं यासि; सभिकं वर्जयित्वा एकं रुद्रोऽपि न रक्षितुं शक्नोति।

माथुरः। कहिं, कहिं, सुसहिअविप्पलम्भआ,

पलासि, ले भअपलिवेविदङ्गआ,

पदे, पदे, समविसमं खलन्तआ,

कुलं, जसं, अद् कसणं कलेन्तआ (१) ॥(१)

द्यूत ॥पदं वीक्ष्य॥ एसोवज्जदि; इअंपणट्ठा पदवी (२)।

माथु ॥आलोक्य, सवितर्कं॥ अले विप्पतीपु पादु, पडिमा सुसु देवउलु ॥विचिन्त्य॥ धुत्तु जुदिकरु, विप्पदीवपदेहिं देउलं पविट्ठु (३)।

द्यूत। ता अणुसरेह्म (४)।

माथु। एव्वं भोदु (५)।

॥ उभौ देवकुलप्रवेशं निरूपयतः; दृष्ट्वा अन्योन्यं संज्ञाप्य ॥

---

(१) कुत्र, कुत्र, सुसभिकविप्रलम्भक

पलायसे, रे भयपरिवेपिताङ्गक

पदे, पदे, समविषमं स्खलन्

कुलं यशः अतिकृष्णं कुर्व्वन्।

(२) एष व्रजति; इयं प्रणष्टा पदवी।

(३) अरे, विप्रतीपौ पादौ प्रतिमाशून्यं देवकुलं, धूर्त्तो द्यूतकरोविप्रतीपपादाभ्यां देवकुलं प्रविष्टः।

(४) ततोऽनुसरावः।

(५) एवं भवतु।

द्यूत। कधं, कट्ठमयी पडिमा (१)।

माथु। अले, ण, क्खु शैलप्पडिमा ॥ इति बहुविध म्बालयतः संज्ञाप्य च ॥ एव्वं भोदु; एहि, जूदं किलेम्ह (२) ॥ बहुविधं द्यूतं क्रीडतः ॥

संवा ॥ द्यूतेच्छाविकारसम्बरणम्बहुविधं कृत्वा; स्वगतं ॥
अले, कत्ताशद्दे णिस्साणअस्स हलदि हडकं मणुश्शश्श,
ढक्काशद्दे व्व णलाधिवश्श पब्भट्ठलज्जश्श।
जाणामि ण कीलिश्शं; शुमेलुशिहलपडणशंणिहं जूअं;
तहवि, क्खु कोइलमहुले कत्ताशद्दे मणं हलदि (३)।

द्यूत। मम पाठे, मम पाठे (४)।

माथु। ण, क्खु, मम पाठे, मम पाठे (५)।

---

(१) कथं, काष्ठमयी प्रतिमा।

(२) अरे, न, खलु शैलप्रतिमा। एवम्भवतु, एहि, द्यूते न क्रीडावः।

(३) अरे, कत्ता शब्दो निर्धनकस्य हरति हृदयं मनुष्यस्य,
ढक्का शब्दइव नराधिपस्य प्रभ्रष्टराज्यस्य।
जानामि, न क्रीडिष्यामि; सुमेरुशिखरपतनसन्निभं द्यूतं;
तथापि खलु, कोकिलमधुरः कत्ताशब्दोमनोहरति।

(४) मम पाठे, मम पाठे।

(५) न, खलु, मम पाठे मम पाठे।

संवा ॥ अन्यतः सहसोपसृत्य ॥ णं मम पाठे (१)।

द्यूत। लड्ढे गोहे (२)।

माथु ॥ गृहीत्वा ॥ अले, प्रेदण्डा, गहीदोसि; पअच्छ तं

दशसुवर्णं (३)।

संवा। अज्ज ददस्सं (४)।

माथु। अहुणा पअच्छ (५)।

संवा। ददस्सं; पसादं कलेहि (६)।

माथु। अले, णं, संपदं पअच्छ (७)।

संवा। शिलु पडदि (८)।

॥ इति भूमौ पतति। उभौ बहुविधन्ताडयतः ॥

---

(१) ननु मम पाठे।

(२) लब्धः पुरुषः।

(३) अरे लुप्तदण्डक गृहीतोऽसि; प्रयच्छ तद्दशसुवर्णं।

(४) अद्य दास्यामि।

५) अधुना प्रयच्छ।

(६) दास्यामि; प्रसादं कुरु।

(७) अरे, ननु, सांप्रतं प्रयच्छ।

(८) शिरः पतति।

माथु। एसु तुं ऊ जूदिअरमण्डलीए बद्धोसि (१)।

संवा ॥ उत्थाय सविषादं ॥ कधं, जूदिअलमण्डलीए बद्धोह्मि। ह्वी, एसे अह्माणं जूदिअलाणं अलङ्घणीए समए; ता कुदो दइस्सं (२)।

माथु। अले, गन्थु कुलुकुलु (३)।

संवा। एव्वं कलेमि ॥ द्यूतकरमुपस्पृश्य ॥ अद्धं ते देमि, अद्धं मे मुञ्चदु (४)।

द्यूत। एव्वं भोदु (५)।

संवा ॥ सभिकमुपगम्य॥ अद्धस्स गन्थु कलेमि, अद्धं पि मे अज्जो मुञ्चदु (६)।

(१) एष त्वं खलु द्यूतकरमण्डल्या बद्धोऽसि।

(२) कथं द्यूतकरमण्डल्या बद्धोऽस्मि। कष्टं, एषोऽस्माकं द्यूतकराणां अलङ्घनीयः समयस्तस्मात्कुतोदास्यामि।

(३) अरे, गण्डः कृतः।

(४) एवं करोमि। अर्द्धं तुभ्यं ददामि, अर्द्धं मह्यं मुञ्चतु।

(५) एवम्भवतु।

(६) अर्द्धस्य गण्डं करोमि, अर्द्धमपि मह्यं आर्य्यो मुञ्चतु।

माथु। को दोशु; एव्वं भोदु (१)।

संवा ॥ प्रकाशं ॥ अज्ज, अद्धं तुए मुक्के (२)।

माथु। मुक्के (३)।

संवा ॥ द्यूतकरं प्रति ॥ अद्धे तुए वि मुक्के (४)।

द्यूत। मुक्के (५)।

संवा। सम्पदं गमिस्सं (६)।

माथु। पअच्छ तं दशसुवण्णं; कहिं गच्छसि (७)।

संवा। पेक्खध, पेक्खध, भट्टालआ! हा, सम्पदं जेव्व एक्काह अद्धे गण्डु कडे, अवलाह अद्धे मुक्के, तथावि, मं अवलं सम्पदं जेव्व मग्गदि (८)

(१) को दोषः, एवम्भवतु।

(२) आर्य्य, अर्द्धं त्वया मुक्तं।

(३) मुक्तं।

(४) अर्द्धं त्वयापि मुक्तं।

(५) मुक्तं।

(६) साम्प्रतं गमिष्यामि।

(७) प्रयच्छ तद्दशसुवर्णं, कुत्र गच्छसि।

(८) प्रेचध्वं, प्रेचध्वं, भट्टारकाः। हा साम्प्रतं एव एकस्य अर्द्धगण्डः कृतः, अपरस्य अर्द्धं मुक्तं, तथापि मां अवलं साम्प्रतमेव याचते।

माथु ॥ गृहीत्वा ॥ धुत्त; माथुरु अहं, णिउणु एत्थ ण अहं धुत्तिज्जामि। ता, पअच्छ तं, पेदंडआ, सव्वं सुवण्णं सम्पदं (१)।

संवा। कुदो ददस्सं (२)।

माथु। पिदरं विक्किणिअ पअच्छ (३)।

संवा। कुदो मे पिदा (४)।

माथु। मादरं विक्किणिअ पअच्छ (५)।

संवा। कुदो मे मादा (६)।

माथु। अप्पाणं विक्किणिअ पअच्छ (७)।

संवा। करेध पसादं; णेध मं लाजमग्गं (८)।

(१) धूर्त्त; माथुर अहं निपुणः, अत्र नाहं धूर्त्तयामि, ततः प्रयच्छ तं लुप्तदण्डकं सर्व्वं सुवर्णं साम्प्रतं।

(२) कुतोदास्यामि।

(३) पितरं विक्रीय प्रयच्छ।

(४) कुतोमे पिता।

(५) मातरं विक्रीय, प्रयच्छ।

(६) कुतोमे माता।

(७) आत्मानं विक्रीय प्रयच्छ।

(८) कुरुत प्रसादं, नयत मां राजमार्गं।

माथु। पअरु (१)।

संवा। एव्वं भोदु ॥ परिक्रामति ॥ अज्जाः, क्किणिध मं इमस्स सहिअस्स हत्यादो दसेहिं सुवस्सकेहिं ॥ दृष्ट्वा; आकाशे ॥ किं भणाध? किं कलइस्ससि त्ति? गेहे दे कम्मकले ऊविस्सं। कधं, अदइअ पड़िवअणं गदे। भोदु; एवं इमं अण्णं भणइस्सं ॥ पुनस्तदेव पठति॥ कधं, एसेवि मं अवधीलिअ गदे। आः अज्जचारुदत्तस्स विहवे विहडिदे एसे वट्ठामि मंदभाए (२)।

माथु। णं देहि (३)।

संवा। कुदो दइस्सं (४) ॥ इति पतति। माथुरः कर्षति ॥

(१) प्रसर।

(२) एवम्भवतु। आर्य्याः, क्रीणीध्वं मां, अस्य सभिकस्य हस्तात् दशभिः सुवर्णकैः। किं भणत? किं कलहं करिष्यसीति। गेहे ते कर्मकरो भविष्यामि। कथं, अदत्वा प्रति वचनं गतः। भवत्वेवं, इमं अन्यं भणिष्यामि। कथं, एषोऽपि मामवधीर्य्य गतः। आः आर्य्य चारुदत्तस्य विभवे विघटिते एषोऽहं बद्ध मन्दभाग्यः।

(३) ननु देहि।

(४) कुतो दास्यामि।

संवा। अज्जा, परित्ताअध, परित्ताअध (१)।

॥ ततः प्रविशति दर्दुरकः॥

दर्दु। भोः; द्युतं हि नाम पुरुषस्यासिंहासनं राज्यं। कुतः।
न गणयति पराभवं, कुतश्चिद्धरति, ददाति च नित्यमर्थजातं।
नृपतिरिव निकाममायदर्शी विभववता समुपास्यते जनेन।

अपिच।

द्रव्यं लब्धं द्यूतेनैव, दारामित्रं द्यूतेनैव,
दत्तं, भुक्तं, द्यूतेनैव, सर्व्वं नष्टं द्यूतेनैव। |५|

त्रेताहृतसर्व्वस्वः, पावरपतनाच्च शोषितशरीरः,
नर्दितदर्शितमार्गः, कटेन विनिपातितोयामि। |७|

॥ अग्रतोऽवलोक्य ॥ अयमस्माकं पूर्व्वसभिको माथुर इत एवाभिवर्त्तते। भवत्वपक्रमितुं न शक्यते तदवगुण्ठयानम्॥ बहुविधं नाट्यं कृत्वा स्थितः। उत्तरीयं निरीक्ष्य॥

अयं पटः सूत्रदरिद्रतां गतो,
ह्ययं पटः छिद्रशतैरलङ्कृतः;
अयं पटः प्रावरितुं न शक्यते,
ह्ययं पटः संवृतएव शोभते।

---

(१) आर्य्या, परित्रायत, परित्रायत।

अथवा किमयं तपस्वी करिष्यति। योहि।

पादेनैकेन गगणे द्वितीयेन च भूतले,
तिष्ठाम्युल्लम्बितस्तावद्यावत्तिष्ठति भास्करः।

माथु। दापय, दापय।

संवा। कुदोदइस्सं(१)॥ माथुरः कर्षति॥

दर्दु। अये किमेतदग्रतः॥ आकाशे॥ किं भवानाह। अयं द्यूतकरः सभिकेन खलीक्रियते, न कश्चिन्मोचयति। नन्वयं दर्दुरोमोचयति॥ उपसृत्य॥ अन्तरमन्तरम्॥ दृष्ट्वा॥ अये, कथं माथुरोधूर्त्तः। अयमपि तपस्वी संवाहकः।

यस्तब्धं दिवसान्तमानतशिरोनास्ते समुल्लम्बितो,
यस्योद्घर्षणलोष्टकैरपि सदा पृष्ठेन जातः किणः।
यस्यैतच्च न कुक्कुरैरहरहर्जङ्घान्तरं चर्व्यते,
तस्यात्यायतकोमलस्य सततं द्यूतप्रसङ्गेन किं।

भवतु; माथुरं तावत् सान्त्वयामि॥ उपगम्य॥ माथुर, अभिवादये।

माथु। प्रत्यभिवादये।

दर्दु। किमेतत्।

माथु। अअं, दससुवस्सं धालेदि (२)।

---

(१) कुतोदास्यामि।

(२) अयं दशसुवर्णकं धारयति।

दर्दु। ननु कल्यवर्त्तमेतत्।

माथु ॥दर्दुरस्य कक्षतललुण्ठीकृतं पटमाक्षिप्य॥ भट्टाः पश्यत, पश्यत। जज्जरपडप्पावुदो अअं पुलिसो दसुवण्णं कल्लवत्तं भणादि (१)।

दर्दु। अरे मूर्ख, नन्वहं दशसुवर्णान् कटकरणेन प्रयच्छामि; तत्किं; यस्यास्ति धनं स च किं क्रोडे कृत्वा दर्शयति। अरे;

दुर्व्वर्णोऽसि, विनष्टोऽसि, दशस्वर्णस्य कारणात्,
पञ्चेन्द्रियसमायुक्तो नरो व्यापाद्यते त्वया। ।१।

माथु। भट्टा, तुए दसुवण्णु कल्लवत्तु मम एस विहव्वु (२)।

दर्दु। यद्येवं श्रूयतां, तर्हि अन्यान् तावद्दशसुवर्णानस्यैव प्रयच्छ, अयमपि द्यूतं शीलयतु।

माथु। तत्किं भोदु (३)।

दर्दु। यदि जेष्यति, तदा दास्यति।

(१) पश्यत, पश्यत। जर्ज्जरपटप्रावृतोऽयं पुरुषो दशसुवर्णं कल्यवर्त्तं भणति।

(२) तव दशसुवर्णं कल्यवर्त्तः मम एषविभवः।

(३) तत्किम्भवतु।

माथु। अह ण जिणादि (१)।

दर्दु। तदा न दास्यति।

माथु। अह ण जुत्तं जम्पिदुं; एव्वं अक्खन्तो तुमं, पअच्छ धुत्तआ। अहं पि णाम माथुरो, धुत्तो, जूअं मित्था आदंस आमि, अणस्स वि अहं ण विभेमि। धुत्त खण्डिअवुत्तोऽसि तुमं (२)।

दर्दु। अरे, कः खण्डितवृत्तः।

माथु। तुं क्ख खण्डिदवुत्तो (३)।

दर्दु। पिता ते खण्डितवृत्तः॥ संवाहकस्यापक्रमितुं संज्ञान्ददाति॥

माथु। गोसाविआपुत्त णं एव्वं जेव्व दूदं तुए सेविदं (४)।

दर्दु। मया एवं द्यूतमासेवितम्।

(१) अथ न जयति।

(२) अथ न युक्तं जल्पितुं; एवं आचचाणस्त्वं, प्रयच्छ; धूर्त्तक। अहमपि नाम माथुरोधूर्त्तः, द्यूतं मिथ्या आदर्शयामि, अन्यस्मै अहं न विभेमि, धूर्त्तः खण्डितवृत्तोऽसि त्वं।

(३) त्वं खलु खण्डितवृत्तः।

(४) वेश्यापुत्र, एवमेव द्यूतं त्वया सेवितं।

माथु। अले, संवाहआ, पअच्छ तं दसुसुवण्णं (१)।

संवा। अज्ज दइस्सं, दाव दइस्सं (२) ॥ माथुरः कर्षति ॥

दर्दु। मूर्ख, परोक्षे खलीकर्त्तुं शक्यते, न ममाग्रतः खलीकर्त्तुं।

॥ माथुरः संवाहकमाकृष्य घोणायां मुष्टिप्रहारं ददाति। संवाहकः सशोणितं मूर्च्छां नाटयन् भूमौ पतति। दर्दुरक उपसृत्यान्तरयति। माथुरो दर्दुरन्ताडयति। दर्दुरो विप्रतीपन्ताडयति।

माथु। अले, अले, दुट्ठ छिणालिआपुत्तअ, फलंपि पाविहसि (३)।

दर्दु। अये मूर्ख, अहं त्वया मार्गगतएव ताडितः; श्वो यदि राजकुले ताडयिष्यसि तदा द्रक्ष्यसि।

माथु। एश्शु पेक्खिश्शं (४)।

दर्दु। कथं द्रक्ष्यसि।

*(१) अरे सम्बाहक, प्रयच्छ त्वं दशसुवर्णं।

(२) अद्य दास्यामि, तावत् दास्यामि।

(३) अरे, अरे, दुष्टपुंश्चलीपुत्रक, फलमपि प्राप्स्यसि।

(४) एष प्रेक्षिष्ये।

माथु॰ ॥ अपवार्य्य चक्षुषी ॥ एव्वं पेक्खिस्सं (१)।

॥ दर्दुरो माथुरस्य पांशुना चक्षुषी पूरयित्वा संवाहकस्या पक्रमितुं संज्ञान्ददाति। माथुरोऽक्षिणी निगृह्य भूमौ पतति। संवाहकोऽपक्रामति॥

दर्दु ॥ स्वगतं॥ प्रधानसभिकोमाथुरो मया विरोधितः; तन्नात्र युज्यते स्थातुं। कथितञ्च मम प्रियवयस्येन शर्व्विलकेन, यथा, किल आर्य्यकनामा गोपालदारकः सिद्धादेशेन समादिष्टो राजा भविष्यतीति; सर्व्वश्चास्मद्विधोजनस्तमनुसरति, तदहमपि तत्समीपमेव गच्छामि ॥ इति निष्क्रान्तः॥

संवा ॥ सत्रासं परिक्रम्य दृष्ट्वा ॥ एसे कस्सवि अपरावुद पक्खदुआलके गेहे, ता एत्थ पविसिस्सं ॥ प्रवेशं रूपयित्वा; वसन्तसेनामालोक्य॥ अज्जे, सलणागदह्मि (२)।

वसं। अभअं सरणागदस्स; हञ्जे, ढक्केहि पक्खदुआरअं (३)।

चेटी ॥ तथा करोति॥

---

(१) एवं प्रेक्षिष्ये।

(२) एतत्कस्यापि अपरावृतपक्षद्वारकं गेहं, तदत्र प्रविशामि। आर्य्ये, शरणागतोऽस्मि।

(३) अभयं शरणागतस्य; हे चेटि, पिधेहि पक्षद्वारकं।

वसं। कुदो दे भश्रं (१)।

संवा। श्रज्जे, धणिकादो (२)।

वसं। हञ्जे, सम्पदं अवावुणु पक्खदुआरश्रं (३)।

संवा ॥ आत्मगतं ॥ कधं, धणिकादो तुलिदं से भश्र कालणं? सुट्ठु क्खु एव्वं वुच्चदि; जे अत्तबलं आणिश्र भालं तुलिदं वहेइ माणुश्शे, ताह खलणं ण जाश्रदि, ण श्र कन्ताल गडे विवज्जदि। एत्थ लक्खिदह्मि (४)।

माथु ॥ अक्षिणी प्रमृज्य द्यूतकरं प्रति ॥ अले, देहि, देहि (५)।

(१) कुतस्ते भयं।

(२) आर्य्ये धनिकात्।

(३) चेटि, साम्प्रतं अपावृणु पक्षद्वारं।

(४) कथं, धनिकात् तुलितं अस्यैव भयकारणं? सुष्ठु खलु एवं उच्यते। यश्चात्मबलं ज्ञात्वा भारं तुलितं वहति मनुष्यः, तस्य स्खलनं न जायते, न च कान्तारगतोविपद्यते। अत्र लक्षितोऽस्मि।

(५) अरे, देहि, देहि।

द्यूत। भट्टा, जावच्चिअ अह्मे दद्दुरेण कलहाविदा, तावच्चिअ सो गोहो अवक्कन्तो (१)।

माथु। तस्स दूदकलमुट्ठिप्पहालेण णासिका भग्गा; एहि, लुहिरपहं अणुसरेह्म (२) ॥ अनुसृत्य ॥

द्यूत। भट्टा, वसन्तसेणागेहं पविट्ठो सो (३)।

माथु। भूदाइं सुवण्णाइं (४)।

द्यूत। लाअउलं गदुअ णिवेदेह्म (५)।

माथु। एस धुत्तो, अदो णिक्कमिअ, अण्णत्त गमिस्सदि। ता उअरोधेणेव गेह्णेह्म (६)।

(१) भट्टा, यावदेव वयं दर्दुरेण कलहायिताः, तावदेव स पुरुषोऽपक्रान्तः।

(२) तस्य द्यूतकरमुष्टिप्रहारेण नासिका भग्ना, एहि रुधिरपथमनुसरामः।

(३) भट्टा, वसन्तसेनागेहं प्रविष्टः सः।

(४) भूतानि सुवर्णानि।

(५) राजकुलं गत्वा निवेदयावः।

(६) एष धूर्त्तः अतोनिष्क्रम्य अन्यत्र गमिष्यति। तस्मादुपरोधेनैव गृह्णीमः।

वसन्तसेना ॥ मदनिकायाः संज्ञान्ददाति ॥

मद। कुदो अज्जो, को वा अज्जो, कस्स वा अज्जो, किं वा विन्तिं अज्जो उवजीअदि, कुदो वा भअं (१)।

संवा। सुणादु अज्जआ, अज्जए; पाडलिउत्ते मे जम्म भूमी, गहवइ दालके हगे, संवाहअस्स विन्तिं उवजी आमि (२)।

वसं। सुउमारा क्खु कला सिक्खिदा अज्जेण (३)।

संवा। अज्जए, कलेत्ति सिक्खिदा, आजीविआ दाणिं सम्वुत्ता (४)।

चेटी। अदिणिव्विणं अज्जेण पडिवअणं दिणं; तदो, तदो (५)।

(१) कुतआर्य्य, कोवा आर्य्यः, कस्य वा आर्य्यः, किम्वा वृत्तिं आर्य्यउपजीवति, कुतोवा भयं।

(२) शृणोतु आर्य्या; आर्य्ये, पाटलिपुत्रे मे जन्मभूमिः, गृहपतिदारकोऽहं, संवाहकस्य वृत्तिं अङ्गमर्द्दनरूपां उप जीवामि।

(३) सुकुमारा खलु कला शिचिता आर्य्येण।

(४) आर्य्ये, कलेति शिचिता, आजीविका इदानीं सम्वृत्ता।

(५) अतिनिर्व्विसं आर्य्येण प्रतिवचनं दत्तं, ततस्ततः।

संवा। तदो, अज्जए, एसे णिअगेहे आहिण्डकाणं मुहादो सुणिअ, अपुव्वदेसदंसणकुदूहलेण इह आगदे, इधवि मए पविसिअ उज्जइणिं एक्के अज्जे सुस्सुसिदे, जेतालिसे पिअदंसणे, पिअवादी, दइअं ण कित्तेदि, अवकिदं विसुमलेदि। किं बहुणा, उत्तेण दक्खिणदाए फलकिलअं विअ, अत्ताणअं अवगच्छदि, सलणागअवच्छलेअ (१)।

चेटी। को दाणिं अज्जआए मणोरहन्तरस्स गुणाइं चोरिअ उज्जइणिं अलङ्करेदि (२)।

वसं। साऊ, हञ्जे, साऊ; मए वि एव्वं जेव्व हिअएण मन्तिदं (३)।

(१) ततआर्य्ये, एष निजगृहे आहिण्डकानां मुखात् श्रुत्वा अपूर्व्वदेशदर्शनकुतूहलेन, इहागतः; इहापि मया प्रविश्य उज्जयिनीं, एकआर्य्यः शुश्रूषितः, यस्तादृशः प्रियदर्शनः, प्रियवादी, दयितं न कीर्त्तयति, अपकृतं विस्मरति। किम्बहुनोक्तेन, दक्षिणतया फलकृतेइव आत्मानं अवगच्छति शरणागतवत्सलस्य।

(२) कइदानीं आर्य्यायामनोरथान्तरस्य गुणान् चोरयित्वा, उज्जयिनीं अलङ्करोति।

(३) साधु, चेटि, साधु; मयापि एवमेव हृदयेन मन्त्रितं।

चेटी। अज्ज, तदो, तदो (१)।

संवा। अज्जए, से दाणिं अणुक्कोसकिदेहिं पदा णेहिं (२)।

वसं। किं उवरदविहवो संवुत्तो (३)।

संवा। अणाचक्खिदे जेव्व कधं अज्जआए विणादं (४)।

वसं। किं एत्थ जाणीअदि; दुल्लहा गुणा विहवा अ; अपेएसु तडाएसु बहुदरं उदअं भोदि (५)।

चेटी। अज्ज किं णामधेओ क्खु सो (६)।

संवा। अज्जे, को दाणिं तस्स भूदलमिअंकस्स णामं ण आणादि; सो क्खु सेट्ठिचत्तले पडिवसदि, सलाहणिज्जणाम धेओ अज्जचारुदत्तो णाम (७)।

---

(१) आर्य्य, ततस्ततः।

(२) आर्य्ये, स इदानीं अनुक्रोशकृतैः प्रदानैः।

(३) किं उपरतविभवः सम्वृत्तः।

(४) अनाख्यातमेव कथं आर्य्यया विज्ञातं।

(५) किमत्र ज्ञातव्यं, दुर्लभागुणाविभवाश्च; अपेयेषु तडागेषु बहुतरमुदकं भवति।

(६) आर्य्य, किंनामधेयः खलु सः।

(७) आर्य्ये, क इदानीं तस्य भूतलमृगाङ्कस्य नाम न जानाति, स खलु श्रेष्ठिचत्वरे प्रतिवसति, श्लाघनीयनामधेय आर्य्यचारुदत्तोनाम।

वसं ॥ सहर्षमासनादवतीर्य्य ॥ अज्जस्स अत्तण केरकं एदं गेहं; हज्जे, देहि से आसणं। तालवेण्टअं गेह्न परिस्समो अज्जस्स बाधेदि (१)।

चेटी ॥ तथा करोति ॥

संवा ॥ स्वगतम्॥ कधं, अज्जचारुदत्तश्श णामसङ्कीत्तणेण ईदिशे मे आदले। शाऊ, अज्जचारुदत्त, शाऊ, पुहवीए तुमं एक्के जीवशि, शेशे उण जणे शशदि ॥ इति पादयोर्निपत्य॥ भोदु, अज्जए, भोदु। आशणे णिशीददु अज्जआ (२)।

वसं ॥आसने समुपविश्य॥ अज्ज, कुदो सो धणिओ (३)।

संवा। सक्कालधणे क्खु सज्जणे, काह ण होइ, चलाचले धणे। जे पूइदुं वि आणादि, से पूआविशेशंवि आणादि (४)।

---

(१) आर्य्यस्य आत्मकृतं एतद्गेहं। हे चेटि, देहि अस्य आसनं, तालवृन्तकं गृहाण, परिश्रमआर्य्यस्य बाधते।

(२) कथं आर्य्यचारुदत्तस्य नामसंकीर्त्तनेन ईदृशो मे आदरः। साधु, आर्य्यचारुदत्त, साधु; पृथिव्यां त्वमेकोजीवसि शेषः पुनर्जनः श्वसिति। भवतु, आर्य्ये, भवतु, आसने निषीदतु आर्य्या।

(३) आर्य्ये कुतः स धनिकः।

(४) सत्कारधनः खलु सज्जनः कस्य न भवति चलाचलं धनं। यः पूजितुं अपि जानाति, स पूजाविशेषमपि जानाति।

वसं। तदो (१)।

संवा। तदो, तेण अज्जेण सवित्ती पलिचालके कदह्मि; चालित्तावशेशे च तस्मिं जूदोपजीविह्मि संवुत्ते। तदो; भाअधेअविशमदाए दशसुवण्णअं जूदे हालिदं (२)।

माथु। उच्छादिदोह्मि, मुसिदोह्मि (३)।

संवा। एदे द सहिअजूदिअला मं अणुसन्धअन्ति, सम्पदं सुणिअ अज्जआ पमाणं (४)।

वसं। मदणिए, वासपादवविसण्ठुलदाए पक्खिणो इदो तदो वि आहिण्डन्ति। हञ्जे, ता गच्छ, एदाणं सहिअजूदिअराणं अअं अज्जो जेव्व पडिवादेदि त्ति, इमं हत्थाभरणअं तुमं देहि (५)॥ इति हस्तात्कटकमाकृष्य चेट्याः प्रयच्छति॥

(१) ततः।

(२) ततस्तेन आर्य्येण सवृत्तिः परिचारकः कृतोऽस्मि; चारित्र्यावशेषे च तस्मिन् द्यूतोपजीवी संवृत्तः। ततोभागधेयविषमतया दशसुवर्णं द्यूते हारितं।

(३) उत्खातितोऽस्मि; मुषितोऽस्मि।

(४) एतौ तौ सभिकद्यूतकरौ, मां अनुसन्धत्तः; साम्प्रतं श्रुत्वा आर्य्या प्रमाणं।

(५) मदनिके, वासपादपविसंष्ठुलतया पक्षिण इतस्ततोऽपि आहिण्डन्ति। हे चेटि, तद्गच्छ, एतयोः सभिकद्यूतकरयोः अयमार्य्यएव प्रतिपादयतीति इदं हस्ताभरणं, त्वं देहि।

चेटी ॥ गृहीत्वा ॥ जं अज्जआ आणवेदि (१) ॥ इति निष्क्रान्ता ॥

माथु। उक्कादिदोह्मि, मुसिदोह्मि (२)।

चेटी। जधा एदे उड्ढं पेक्खन्ति, दीहं णीससन्ति अ, विद्धरअन्ति अ, अहिलहन्ति अ, दुआरअणिहिदलोअणा, तधा तक्केमि, एदे दे सहिआजूदिअला हुविस्सन्ति ॥ उपगम्य ॥ अज्ज, वन्दामि (३)।

माथु। सुहं तुह होदु (४)।

चेटी। अज्ज, कदमो तुह्माणं सहिओ (५)।

माथु। कस्स तुहं तणुमज्झे, अहरेण रददट्ठदुव्विणीदेण।
जम्पसि मम्मणवअणं, आलोअन्ती कडक्खेण।
नत्थि मम विहवो, अण्णत्त वज्ज (६)।

---

(१) यत् आर्य्या आज्ञापयति।

(२) उत्सादितोऽस्मि, मुषितोऽस्मि।

(३) यथा एतौ ऊर्द्ध्वं प्रेक्षेते, दीर्घं निश्वसतश्च, विचारयतश्च, अभिलपतश्च द्वारनिहितलोचनौ, तथा तर्कयामि, एतौ तौ सभिकद्यूतकरौ भविष्यतः। आर्य्य वन्दे।

(४) सुखं तव भवेत्।

(५) आर्य्ये, कतमो युष्माकं सभिकः।

(६) कस्य त्वं, तनुमध्ये, अधरेण रतदष्टदुर्व्विणीतेन।
जल्पसि मनोहरवचनं, आलोकयन्ती कटाक्षेण।
नास्ति मम विभवः, अन्यत्र व्रज।

चेटी। जइ ईदिसाइं णं मन्तेसि ता ण होसि जदि अरो। अत्थि कोवि तुह्माणं धारओ (१)।

माथु। अत्थि दशसुवसं धालेदि; किं तस्स (२)।

चेटी। तस्स कालणादो अज्जआ इमं हत्थाभलणं पडिवादेदि; णहि, णहि, सो ज्जेव्व पडिवादेदि (३)।

माथु ॥ सहर्षं गृहीत्वा ॥ अले, भणेशि तं कुलवुत्तं; भूदं तुह गन्धु, आअक्ख, पुणो जूदं रमह (४) ॥ इति निष्क्रान्तौ ॥

चेटी ॥ वसन्तसेनामुपसृत्य ॥ अज्जए, पडितुट्ठा गदा सहिआ जूदिअरा (५)।

वसं। ता गच्छदु अज्जो, वन्धुअणं समस्सासिदुं (६)।

(१) यदि ईदृशानि ननु मन्त्रयसि तदा न भवसि द्यूतकरः। अस्ति कोऽपि युष्माकं धारकः।

(२) अस्ति, दशसुवर्णं धारयति, किं तस्य।

(३) तस्य कारणात् आर्य्या इदं हस्ताभरणं प्रतिपादयति; नहि, नहि, सएव प्रतिपादयति।

(४) अरे, भणसि तं कुलपुत्रं; भूतः तव गण्डः, आगच्छ, पुनः द्यूतं रमस्व।

(५) आर्य्ये, परितुष्टागताः सभिकद्यूतकराः।

(६) तद्गच्छतु आर्य्यो बन्धुजनं समाश्वासयितुं।

संवा। अज्जए, जइ एव्वं ता इश्रं कला परिअणहत्थ गदा कलीअदु (१)।

वसं। अज्ज, जस्स कारणादो इअं कला सिक्खीअदि, सोजेव्व अज्जेण सुस्सुसिदपुरुव्वो सुस्सुसिदव्वो (२)।

संवा ॥ स्वगतम् ॥ अज्जआए णिउणं पच्चादिट्ठोह्मि। कधं पच्चुवकलिस्सं ॥ प्रकाशम् ॥ अज्जए, अहं एदिणा जूदिअ लावमाणेण शक्कशवणके ऊविश्शं। ता शंवाहके, जूदिअले, शक्कश वणके शंवुत्तेत्ति, शुमलिदव्वा अज्जआए एदे अक्खलु (३)।

वसं। अज्ज, अलं साहसेण (४)।

(१) आर्य्य, यदि एवं तत् इयं कला परिजनहस्तगता क्रियतां।

(२) आर्य्ये, यस्य कारणात् इयं कला शिक्ष्यते, सएव आर्य्येण शुश्रूषितपूर्व्वः शुश्रूषितव्यः।

(३) आर्य्यया निपुणं प्रत्यादिष्टोऽस्मि। कथं प्रत्युप करिष्ये। आर्य्ये, अहं एतेन द्यूतकरावमानेन शाक्यश्रमणको भविष्यामि। तत् सम्वाहको, द्यूतकरः, शाक्यश्रमणकः संवृत्तः, इति स्मर्त्तव्यानि आर्य्यया एतानि अक्षराणि।

(४) आर्य्य, अलं साहसेन।

संवा। अज्जाए कले णिचए ॥ इति परिक्रम्य ॥ जूदेण तं कदं मे जं वीहत्थं जणस्स सव्वस्स। एहिं पाअडशीसे णलिन्द मग्गेण विहलिस्सं (१) ॥ नेपथ्ये, कलकलः ॥

संवा ॥ आकर्ण्य ॥ अले, किं णेदं ॥ आकाशे ॥ किं भणाध? एशे क्खु वशन्तशेणा केलके खुण्टमोडके णाम दुट्ठहत्थी विहलेदित्ति। अहो अज्जआए गन्धगअं पेक्खिस्सं गदुअ; अह वा, किं मम एदिणा जधा ववशिदं अणुचिट्ठिस्सं (२) ॥ इति निष्क्रान्तः ॥

॥ ततः प्रविशति अपटाक्षेपेण प्रहृष्टोविकटोज्वलवेशः कर्णपूरकः ॥

कर्ण। कहिं कहिं अज्जआ (३)।

(१) आर्य्ये, कृतो निश्चयः। द्यूतेन तत्कृतं मम यत् विहस्तं जनस्य सर्व्वस्य। इदानीं प्रकटशीर्षोनरेन्द्रमार्गेण विहरिष्यामि।

(२) अरे, किं नेदं। किं भणत? एष खलु वसन्तसेनाक्रीडापात्रं स्तम्भभञ्जकोनाम दुष्टहस्ती विहरतीति। अहो, आर्य्यायागन्धगजं प्रेक्षिष्ये, गत्वा; अथवा, किं मम एतेन यथा व्यवसितं अनुष्ठास्यामि।

(३) कुत्र कुत्र आर्य्या।

चेटी। दुम्मणुस्स, किं ते उव्वेअकालणं, जं अग्गदोव ट्ठिदं अज्जअं न पेक्खसि (१)।

कर्ण ॥ दृष्ट्वा ॥ अज्जए, वन्दामि (२)।

वसं। कसऊरअ; पलितुट्ठमुहो लक्खीअसि, ता किं णेदं (३)।

कर्ण ॥ सविस्मयं ॥ अज्जए, वञ्चिदासि जाए अज्ज कस ऊरअस्स परक्कमो ण दिट्ठो (४)।

वसं। कसऊरअ, किं (५)।

कर्ण। सुणादु अज्जआ; जो सो अज्जआए खुण्टमोडओ णाम दुट्ठहत्थी, सो आलाणखंभं भञ्जिअ, महमेत्थं वावा दिअ, महन्तं सङ्खोहं करेन्तो, राअमग्गं ओदिण्णो। तदो एत्थंतरे उग्घुट्ठं जणेण;

अवणेध वालअजणं, तुरिदं आरुहदु रुक्खपासादं;
किं ण क्खु पेक्खध; पुरदो दुट्ठो हत्थी इदो एदि। ८

(१) दुर्मनुष्य; किन्ते उद्वेगकारणं, यत् अग्रतोऽवस्थितां आर्य्यां न प्रेक्षसे।

(२) आर्य्ये वन्दे।

(३) कर्णपूरक, परितुष्टमुखो लक्ष्यसे, तत् किं नेदं।

(४) आर्य्ये, वञ्चितासि, यया अद्य कर्णपूरकस्य पराक्रमो न दृष्टः।

(५) कर्णपूरक किं।

अविअ ।

विअलइ णेउरजुअलं, छिज्जन्ति अ मेहला मणिक्खइआ।

वलआ अ सुन्दरदरा, रअणंकुरजालपडिवद्धा। (७)

तदो तेण दुट्ठहत्थिणा कलचलणरदणेहिं, फुल्लणलिणिं व्व णअरिं उज्जइणिं अवग्गहमाणेण, समासादिदो परिव्वाजओ। तस्स परिब्भट्ठदण्डकुण्डिआभाअणं सीअरेहिं सिञ्चिअ, दन्तंतरे क्खित्तं पेक्खिअ, पुणोवि उग्घुट्ठं जणेण, हा, परिव्वाजओ वावादीअदित्ति (१)।

---

(१) शृणोतु आर्य्या; यः स आर्य्यायाः स्तम्भभञ्जको नाम दुष्टहस्ती, स आलानस्तम्भं भंक्त्वा, महामात्रं व्यापाद्य, महान्तं संक्षोभं कुर्व्वन्, राजमार्गमवतीर्णः; ततः अत्रान्तरे उद्घुष्टं जनेन;

अपनयत बालकजनं, त्वरितं आरोहत वृक्षप्रासादं;

किं न खलु प्रेक्षध्वं; पुरतो दुष्टोहस्तीइतएति।

अपिच।

विचरति नूपुरयुगलं, छिद्यन्ते च मेखलामणिखचिताः,

बलया च सुन्दरतरा, रत्नाङ्कुरजालप्रतिबद्धा।

ततस्तेन दुष्टहस्तिना करचरणरदनैः, फुल्लनलिनीमिव नगरीमुज्जयिनीमवगाहमानेन, समासादितः परिव्राजकः। तस्य परिभ्रष्टदण्डकुण्डिकाभाजनं शीकरैः सिक्त्वा, दन्तान्तरे क्षिप्तं प्रेक्ष्य, पुनरप्युद्घुष्टं जनेन, हा परिव्राजको व्यापाद्यतेइति।

वसं ॥ ससम्भ्रमं ॥ अहो पमादो; अहो पमादो (१)।

कर्ण। अलं सम्भमेण; सुणादु दाव अज्जआ। तदो विच्छिस्रविसण्ठुलसिङ्खलाकलावअं उव्वहन्तं दन्तन्तरपरिग्गहिदं परिव्वाजअं उव्वहन्तं तं पेक्खिअ, कस्सऊरएण मए, णहि, णहि, अज्जआए अस्सपिण्डोवपुट्ठेण दासेण, वामचलणेण जूदलेखअं उग्घुसिअ, उग्घुसिअ, तुरिदं आवणादो लोह दण्डं गेह्निअ, आआरिदो सो दुट्ठहत्थी (२)।

वसं। तदो तदो (३)।

कर्ण। आहणिऊण सरोसं तं हत्थिं, विंझसेलसिहराभं, मोआविओ मए सो दन्तन्तरसंठिओ परिव्वाजओ (४)।

---

(१) अहो प्रमादः, अहो प्रमादः।

(२) अलं संभ्रमेण; शृणोतु तावत् आर्य्या। ततोविच्छिन्नविसंष्ठुलशृङ्खलाकलापं उद्वहन्तं दन्तान्तरपरिगृहीतं परिव्राजकं उद्वहन्तं तं प्रेक्ष्य, कर्णपूरकेण मया, नहि, नहि, आर्य्याया अन्नपिण्डोपपुष्टेन दासेन, वामचरणेन द्यूतलेखकं उद्धृष्य, उद्धृष्य, त्वरितं आपणात् लौहदण्डं गृहीत्वा, आकारितः स दुष्टहस्ती।

(३) ततस्ततः।

(४) आहत्य सरोषं तं हस्तिनं, बिन्ध्यशैलशिखराभं, मोचितोमया स दन्तान्तरसंस्थितः परिव्राजकः।

वसं। सुट्ठु दे किदं (१)।

कर्ण। तदो अज्जए; साऊ, रे कणऊरअ, साऊ त्ति, एत्तिअमत्तं भणन्तो, विसमभरक्कन्ता विअ णावा एक्कदो पल्लत्या सअला उज्जइणी आसि। तदो, अज्जए, एक्केण सुखाइं आहरणट्ठानाइं परामसिअ उद्धं पेक्खिअ, दीहं णीससिअ, अअं पावारओ ममोवरि क्खित्तो (२)।

वसं। कणऊरअ, जाणेहि दाव, किं एसो जादीकुसुम वासिदो पावारओ, ण वेत्ति (३)।

कर्ण। अज्जए, मदगन्धेण सुट्ठ तं गन्धं ण जाणामि (४)।

(१) सुष्ठु त्वया कृतं।

(२) तत आर्य्ये; साधु, रे कर्णपूरक, साधु, इत्येतावन्मात्रं भणन्तो विषमभराक्रान्ता इव नौः एकतः पर्य्यस्ता सकला उज्जयिनी आसीत्। तत, आर्य्ये, एकेन शून्यानि आभरण स्थानानि परामृश्य ऊर्द्ध्वं प्रेक्ष्य, दीर्घं निःश्वस्य, अयं प्रावारको ममोपरि क्षिप्तः।

(३) कर्णपूरक, जानीहि तावत्, किं एष जातीकुसुम वासितः प्रावारकोनवा इति।

(४) आर्य्ये, मदगन्धेन सुष्ठु तं गन्धं न जानामि।

वसं। णामं पि दाव पेक्ख (१)।

कर्ण। इमं णामं अज्जआ एव्व वाएदु (२) ॥ इति प्रावारकमुपनयति। वसन्तसेना, आर्य्य चारुदत्तस्येति वाचयित्वा, सस्पृहं गृहीत्वा प्रावृणोति।

चेटी। कणऊरअ, सोहइ अज्जआए पावारओ (३)।

कर्ण। आं, सोहइ अज्जआए पावारओ (४)।

वसं। कणऊरअ, इदं दे पारितोसिअं (५) ॥ इत्याभरणं प्रयच्छति ॥

कर्ण ॥ शिरसा गृहीत्वा प्रणम्य च॥ सम्पदं सुट्ठु सोहइ अज्जआए पावारओ (६)।

वसं। कणऊरअ, एदाए वेलाए कहिं अज्ज चारुदत्तो (७)।

(१) नामापि तावत् प्रेचस्व।

(२) इदं नाम आर्य्या एव वाचयतु।

(३) कर्णपूरक, शोभते आर्य्यायाः प्रावारकः।

(४) आं शोभते आर्य्यायाः प्रावारकः।

(५) कर्णपूरक, इदन्ते पारितोषिकं।

(६) साम्प्रतं सुष्ठु शोभते आर्य्यायाः प्रावारकः।

(७) कर्णपूरक, एतस्यां वेलायां कुत्रार्य्य चारुदत्तः।

कर्ण। एदेण जेव्व मग्गेण पवुत्तो गेहं (१)।

वसं। हञ्जे, उवरिदणं अलिन्दअं आरुहिअ, अज्जचारुदत्तं पेक्खेह्म (२)।

॥ इति निष्क्रान्ताः सर्व्वे ॥

इति द्यूतकरसम्वाहकोनाम द्वितीयोऽङ्कः।

---

(१) एतेनैव मार्गेण प्रवृत्तो गेहं।

(२) हे चेटि, उपरितनं अलिन्दकं आरुह्य, आर्य्यं चारुदत्तं पश्यामः।

## ॥ अथ तृतीयोऽङ्कः ॥

ततः प्रविशति चेटः।

चेटः। सुअणे क्खु भिच्चानुकम्पके सामिए निद्धणकेवि सोहदि;
पिसुणे उण दव्वगव्विदे दुक्कले खु पलिणामदालुणे।
सुअणे क्खु कुभिच्चपालए, धणहोणे अपहूवि सोहदि;
पिशुणे उण दव्वगव्विदे,ण अ लच्छीविहवावलंविदे।

अपिच।

शश्शपलक्कवलद्दे ण शक्कि वालिदुं;
अण्णकलत्तपशत्ते ण शक्कि वालिदुं;
जूदपशत्त मणुश्शे ण शक्कि वालिदुं;
जेवि सहाविअदोशे ण शक्कि वालिदुं। 2

कावि वेला अज्जचारुदत्तस्स गन्धव्वं सुणिदुं गदस्स अदिक्कमदि अद्धलअणी, अज्जवि णागच्छदि। ता जाव, वाहिरदुआरसालाए गदुअ सुविस्सं (१)।

---

(१) सुजनः खलु भृत्यानुकम्पकः स्वामी निर्द्धनकोऽपि शोभते;
पिशुनः पुनर्द्रव्यगर्व्वितो दुष्करः खलु परिणामदारुणः।
सुजनः खलु कुभृत्यपालको धनहीनोऽप्रभुरपि शोभते,
पिशुनः पुनर्द्रव्यगर्व्वितोन च लक्ष्मीविभवावलम्बितः।

॥ तथा करोति । ततः प्रविशति चारुदत्तोविदूषकश्च ॥

चारु । अहो साधु, साधु, रेभिलेन गीतं । वीणा हि नाम असमुद्रोत्थितं रत्नं । कुतः;

उत्कण्ठितस्य हृदयानुगुणा वयस्या,
सङ्केतके चिरयति प्रवरोविनोदः;
संस्थापना प्रियतमा विरहातुराणां,
रक्तस्य रागपरिवृद्धिकरः प्रमोदः।

विदू । भो, एहि गेहं गच्छह्म (१)।

अपिच ।

अश्वलम्पटबलीवर्द्दो न शक्योवारयितुं;
अन्यकलत्रप्रसक्तोन शक्योवारयितुं;
द्यूतप्रसक्तोमनुष्योन शक्योवारयितुं;
योपि स्वाभाविकदोषो न शक्योवारयितुं।

कापि वेला आर्य्य चारुदत्तस्य गान्धर्व्वं श्रोतुं गतस्य अतिक्रामति अर्द्धरजनी, अद्यापि नागच्छति । तत् यावत्, वहिर्द्वारशालायां गत्वा स्वप्स्यामि।

(१) भो एहि, गृहं गच्छावः।

चारु। अहो सुष्ठु भावरेभिलेन गीतं।

विदू। मम दाव दुवेहिं जेव्व हस्सं जाअदि। इत्थिआए सक्कदं पठन्तीए, मणुस्सेण अ काअलीं गाअन्तेण। इत्थिआ दाव सक्कदं पठन्ती, दिण्णणवणस्साविअ गिट्ठी अधिअं सुसुआअदि; मणुस्सोवि काअली गाअन्तो, सुक्खसुमणोदामवेढ्ढिदो बुड्ढपुरोहिदो विअ मन्तं जवन्तो, दिढं मे ण रोअदि (१)।

चारु। वयस्य सुष्ठु खल्वद्य गीतं भावरेभिलेन; नच भवान् परितुष्टः?

रक्तञ्च, नाम, मधुरञ्च, समं, स्फुटञ्च,
भावान्वितञ्च, ललितञ्च, मनोहरञ्च,
किम्वा प्रशस्तवचनैर्बहुभिर्मदुक्तै
रन्तर्हिता यदि भवेदनितेति मन्ये। ।४।

(१) मम तावत् द्वाभ्यामेव हास्यं जायते। स्त्रिया संस्कृतं पठन्त्या, मनुष्येण च काकलीं गायता। स्त्री तावत् संस्कृतं पठन्ती दत्तनवनासिकारज्जुरिव गृष्टिः अधिकं सुसुशब्दं करोति; मनुष्योऽपि काकलीं गायन्, शुष्कसुमनोदामवेष्टितो वृद्धपुरोहित इव मन्त्रं जपन्, दृढं मे न रोचते।

अपिच।

तं तस्य स्वरसंक्रमं मृदुगिरः, श्लिष्टञ्च तन्त्रीस्वनं,
वर्णानामपि मूर्च्छनान्तरगतं, तारं विरामे मृदुं;
हेलासंयमितं पुनश्च, ललितं रागद्विरुच्चारितं,
यत्सत्यं विरतेऽपि गीतसमये, गच्छामि शृण्वन्निव। ८

विदू। भो वअस्स, आवणन्तररच्छाविहाएसु सुहं कुक्कुरा वि सुत्ता, ता गेहं गच्छेम्ह ॥ अग्रतोऽवलोक्य॥ वअस्स, पेक्ख, पेक्ख, एसोवि अन्धआरस्स विअ अवआसं देन्तो, अन्तरिक्ख पासादादो ओदरदि भअवं चन्दो (१)।

चारु। सम्यगाह भवान्।

असौ हि दत्वा तिमिरावकाशमस्तं व्रजत्युन्नतकोटिरिन्दुः;
जलावगाढस्य वनद्विपस्य तीक्ष्णं विषाणाग्रमिवावशिष्टं।

विदू। भो, एदं अह्माणं गेहं; वड्ढमाणआ, उग्घेहि दुआरअं (२)।

(१) भो वयस्य, आपणान्तररथ्याविभागेषु सुखं कुक्कुरा अपि सुप्ताः, तत् गृहं गच्छावः। वयस्य, पश्य, पश्य, एषोऽपि अन्धकारस्येवावकाशं ददत् अन्तरीक्षप्रासादात् अवतरति भगवान् चन्द्रः।

(२) भो इदं अस्माकं गेहं, वर्द्धमानक, उद्घाटय द्वारं।

चेटः। अज्ज मित्तेअ शलशञ्जोए शुणीअदि; आगदे अज्जचालुदत्ते। ता जाव दुआलअं शे देमि ॥ तथा कृत्वा ॥ अज्ज वन्दामि; मित्तेअ तुमंपि वन्दामि। एत्थ वित्थिण्णे आशणे णिशीदन्तु अज्जा (१)।

॥ उभौ नाट्येन प्रविश्य उपविशतः ॥

विदू। वड्ढमाणआ, रअणिअं सद्दावेहि पादाइं धोइदुं (२)।

चारु ॥ सानुकम्पं ॥ अलं सुप्तजनं प्रबोधयितुं।

चेटः। अज्ज मित्तेअ; अहं पाणिअं गेह्ले, तुमं पादाइं धोवेहि (३)।

विदू। भो वअस्स, एसो दाणिं दासीए पुत्तो भविअ, पाणिअं गेह्लेदि, मं उण वंह्मणं पादाइं सोधावेदि (४)।

चारु। वयस्य मैत्रेय, त्वमुदकं गृहाण, वर्द्धमानकः पादौ प्रक्षालयतु।

---

(१) आर्य्य मैत्रेय स्वरसंयोगः श्रूयते; आगतश्चार्य्य चारुदत्तः। तत् यावत् द्वारं अस्य ददामि। आर्य्य वन्दे; मैत्रेय त्वामपि वन्दे; अत्र विस्तीर्णे आसने निसीदतं आर्य्यौ।

(२) वर्द्धमानक, रदनिकां आकारय पादौ धावितुं।

(३) आर्य्य मैत्रेय, अहं पानीयं गृह्लामि, त्वं पादौ धाव।

(४) भो वयस्य, एष इदानीं दासीपुत्रोभूत्वा, पानीयं गृह्लाति, मां पुनर्ब्राह्मणं पादौ धावयति।

चेटः। अज्ज मित्तेअ, देहि उदअं (१)।

विदू ॥ तथा करोति चेटः; चारुदत्तस्य पादौ प्रक्षाल्यापसरति ॥

चारु। दीयतां ब्राह्मणस्य पादोदकं।

विदू। किं मम पादोदएहिं, भूमीए जेव्व मए गद्दहेण विअ पुणोवि लोट्टिदव्वं (२)।

चेटः। अज्ज मित्तेअ, बंह्मणे खु तुमं (३)?

विदू। जधा सव्वणागाणं मज्झे डुंडुहो, तधा सव्वबंह्मणाणं मज्झे अहं बंह्मणो (४)।

चेटः। अज्ज मित्तेअ, तधावि धोइस्सं ॥ तथा कृत्वा ॥ अज्ज मित्तेअ, एदं तं सुवण्णभण्डअं, मम दिवा, तुह रत्तिं च; ता गेह्ण (५) ॥ इति दत्वा निष्क्रान्तः ॥

---

(१) आर्य्य मैत्रेय, देहि उदकं।

(२) किं मम पादोदकैः, भूम्यां एव मया गर्द्दभेन इव पुनरपि लोटितव्यं।

(३) आर्य्य मैत्रेय, ब्राह्मणः खलु त्वं?

(४) यथा सर्व्वनागानां मध्ये डुण्डुभः, तथा सर्व्वब्राह्मणानां मध्ये अहं ब्राह्मणः।

(५) आर्य्य मैत्रेय, तथापि धाविष्यामि। आर्य्य मैत्रेय, एतत् तत् सुवर्णभाण्डं मम दिवा, तव रात्रौ च; तद्गृहाण।

विदू ॥ गृहीत्वा ॥ अज्जवि एदं चिट्ठदि। किं; एत्थ उज्जइणीए चोरोवि णत्थि, जो एदं दासीए पुत्तो णिद्दा चोरं णावहरदि। भो वअस्स, अब्भन्तरचतुःसालअं पवेस आमि णं (१)।

चारु।

अलं चतुःशालमिमं प्रवेश्य; प्रकाशनारीधृत एष यस्मात्।
तस्मात्त्वयं धारय, विप्र, तावद्यावन्न तस्याः खलु भोः समर्प्यते।

॥ निद्रां नाटयन् ॥ तं तस्य स्वरसंयममिति पुनः पठति ॥

विदू। अवि णिद्दाअदि भवं (२)।

चारु। अथ किं।

इयं हि निद्रा नयनावलम्बिनी ललाटदेशादुपसर्पतीव मां;
अदृश्यरूपा चपला जरेव, मनुष्यसत्त्वं परिभूय वर्द्धते।

विदू। ता सुवेह्म (३) ॥ नाट्येन स्वपितः ॥ ततः प्रविशति शर्विलकः।

(१) अद्यापि एतत् तिष्ठति। किमत्र उज्जयिन्यां चौरोऽपि नास्ति। यए तद्दास्याः पुत्रो निद्राचौर्य्यं नापहरति। भो वयस्य अभ्यन्तरचतुःशालकं प्रवेशयामि एनं।

(२) अपि निद्राति भवान्।

(३) तत् स्वपिवः।

शर्विलकः

कृत्वा शरीरपरिणाहसुखप्रवेशं,
शिक्षाबलेन च, बलेन च, कर्म्ममार्गं,
गच्छामि भूमिपरिसर्प्पणघृष्टपार्श्वो,
निर्मुच्यमान इव जीर्णतनुर्भुजङ्गः। ।५

॥ नभोऽवलोक्य सहर्षं॥ अये कथमस्तमुपगच्छति स भगवान्मृगाङ्कः। तथाहि।

नृपतिपुरुषशङ्कितप्रचारं परगृहदूषणनिश्चितैकवीरं,
घनतिमिरनिरुद्धसर्व्वभावा रजनिरियं जननीव संवृणोति। ।११

वृक्षवाटिकापरिसरे सन्धिं कृत्वा प्रविष्टोऽस्मि; मध्यमकक्षां यावदिदानीञ्चतुःशालकमपि दूषयामि। भोः।

कामं नीचमिदं वदन्ति पुरुषाः, स्वप्ने च यद्वर्द्धते,
विश्वस्तेषु च वञ्चनापरिभवश्चौर्य्यं न शौर्य्यं हि तत्,
स्वाधीना वचनीयतापि हि, वरं, वद्धो न सेवाञ्जलि
र्मार्गो ह्येष नरेन्द्रसौप्तिकवधे पूर्व्वं कृतो द्रौणिना। ।६

तत्कस्मिन्नुद्देशे सन्धिमुत्पादयामि।

देशः को नु जलावसेकशिथिलो यस्मिन्न शब्दो भवे
द्भित्तीनाञ्च न दर्शनान्तरगतः सन्धिः करालो भवेत्;
क्षारक्षीणतया च लोष्टककृशञ्जीर्णं क्व हर्म्यं भवेत्,
कस्मिन्स्त्रीजनदर्शनञ्च न भवेत्स्यादर्थसिद्धिश्च मे। ।७

॥भित्तिं परामृश्य॥ नित्यादित्यदर्शनोदकसेचनेन दूषितेयं भूमिः, क्षारक्षीणा, मूषिकोत्करश्चेह; हन्त सिद्धोऽयमर्थः।

प्रथममेतत् स्कन्दपुत्राणां सिद्धिलक्षणं। अत्र कर्मप्रारम्भे कीदृश मिदानीं सन्धिमुत्पादयामि। इह खलु भगवता कनकशक्तिना चतुर्विधः सन्ध्युपायोदर्शितः, तद्यथा; पक्केष्टकाना माकर्षणं, आमेष्टकानाञ्छेदनं, पिण्डमयानां सेचनं, काष्ठमयानां पाटनमिति। तदत्र पक्केष्टके इष्टिकाकर्षणं। तत्र।

पद्मव्याकोशं, भास्करं, बालचन्द्रं,
वापीविस्तीर्णं, स्वस्तिकं, पूर्णकुम्भं,
तत्कस्मिन् देशे दर्शयाम्यात्मशिल्पं,
दृष्ट्वा श्वोयं यद्विस्मयं यान्ति पौराः। [१०]

तदत्र पक्केष्टके पूर्णकुम्भएव शोभते। तमुत्पादयामि।

अन्यासु भित्तिषु मया निशि पाटितासु,
क्षारक्षतासु विषमासु च कल्पनासु,
दृष्ट्वा प्रभातसमये प्रतिवेशिवर्गो,
दोषांश्च मे वदति कर्मणि कौशलञ्च। [११]

नमो वरदाय कुमारकार्त्तिकेयाय, नमः कनकशक्तये, ब्रह्मण्याय देवाय देवव्रताय, नमो भास्करनन्दिने, नमो योगाचार्य्याय, यस्याहम्प्रथमः शिष्यः। तेन च परितुष्टेन योगरोचना मे दत्ता,

अनया हि समालब्धं न मां द्रक्ष्यन्ति रक्षिणः,
शस्त्रञ्च पतितं गात्रे रुजं नोत्पादयिष्यति। [१२]

॥ तथा करोति ॥ धिक्कष्टं प्रमाणसूत्रं मे विस्मृतं ॥ विचिन्त्य ॥ आं, इदं यज्ञोपवीतं प्रमाणसूत्रं भविष्यति, यज्ञोपवीतं हि नाम

आत्मरक्षणस्य महदुपकरणद्रव्यं; विशेषतोऽस्मद्विधस्य। कुतः।

एतेन मापयति भित्तिषु कर्म्म मार्ग
मेतेन मोचयति भूषणसंप्रयोगान्,
उद्घाटको भवति यन्त्रदृढे कपाटे,
दष्टस्य कीटभुजगैः परिवेष्टनञ्च। १८

मापयित्वा कर्म्म समारेभे ॥ तथा कृत्वावलोक्य च॥ एक लोष्टावशेषोऽयं सन्धिः। धिक्कष्टं! अहिना दष्टोऽस्मि ॥ यज्ञोपवीतेनाङ्गुलीं बद्ध्वा विषवेगं नाटयति॥ चिकित्सां कृत्वा स्वस्थोऽस्मि॥ पुनः कर्म्म कृत्वा दृष्ट्वा च॥ अये ज्वलति प्रदीपः। तथाहि;

शिखा प्रदीपस्य सुवर्णपिञ्जरा महीतले सन्धिमुखेन निर्गता,
विभाति पर्य्यन्ततमःसमावृता सुवर्णरेखेव कषे निवेशिता।

॥ पुनः कर्म्म कृत्वा॥ समाप्तोऽयं सन्धिः। भवतु; प्रविशामि। अथवा न तावत्प्रविशामि प्रतिपुरुषं निवेशयामि॥ तथा कृत्वा॥ अये न कश्चित्। नमः कार्त्तिकेयाय ॥ प्रविश्य दृष्ट्वा च॥ अये, पुरुषद्वयं सुप्तं। भवतु, आत्मरक्षार्थं द्वारमुद्घाटयामि। कथं जीर्णत्वाद्गृहस्य विरौति कपाटः; तद्यावत्सलिलमन्वेषयामि। क्व नु खलु ॥ सलिलं गृहीत्वा क्षिपन् सशङ्कं॥ मा तावत्, भूमौ पतत् शब्दमुत्पादयेत्। भवत्वेवन्तावत् ॥ पृष्ठेन प्रतीक्ष्य कपाटमुद्घाट्य ॥ भवत्वेवन्तावदिदानीं परीक्षे, किं लक्ष्यसुप्तमुत परमार्थसुप्तमिदं द्वयं ॥ त्रासयित्वा परीक्ष्य च ॥ अये, परमार्थसुप्तेनानेन भवितव्यं। तथाहि;

निःश्वासोऽस्य न शङ्कितः, सुविशदः स्वप्रान्तरं वर्त्तते,
दृष्टिर्गाढनिमीलिता, न विकला नाभ्यन्तरञ्चञ्चला,
गात्रं स्रस्तशरीरसन्धिशिथिलं, शय्याप्रमाणाधिकं,
दीपञ्चापि न मर्षयेदभिमुखं स्याल्लक्ष्यसुप्तं यदि। ।१४।

॥ समन्तादवलोक्य ॥ अये कथं मृदङ्गः। अयं दर्दुरः। अयं पणवः। इयमपि वीणा। एते वंशाः। अमी पुस्तकाः। कथं नाट्याचार्य्यस्य गृहमिदं। अथवा, भवनप्रत्ययात्प्रविष्टोऽस्मि, तत्किं परमार्थदरिद्रोऽयं; उत राजभयाच्चौरभयाद्वा भूमिष्ठं द्रव्यन्धारयति। तन्ममापि नाम शर्विलकस्य भूमिष्ठं द्रव्यं प्रक्षिपामि ॥ तथा कृत्वा॥ निक्षिप्तं वीजं न क्वचित्स्फारी भवति। अये परमार्थदरिद्रोऽयं। भवतु, गच्छामि।

विदू ॥ उत्स्वप्नायते॥ भो वअस्स, सन्धी विअ दिस्सदि, चोरं विअ पेक्खामि, ता गेह्णदु भवं एदं सुवस्णभण्डअं(१)।

शर्वि। किन्नु खल्वयमिह मां प्रविष्टं ज्ञात्वा दरिद्रोऽस्मीति उपहसति, तत्किं व्यापादयामि। उत लघुत्वादुत्स्वप्नायते ॥ दृष्ट्वा॥ अये, जर्जरस्नानशाटीनिवद्धं दीपप्रभयोद्दीपितं सत्यमेवैतदलङ्करणभाण्डं। भवतु गृह्णामि। अथवा, न युक्तन्तुल्यावस्थं कुलपुत्रजनं पीडयितुं; तद्गच्छामि।

(१) भो वयस्य, सन्धिरिव दृश्यते, चौरमिव पश्यामि, तत् गृह्णातु भवान् इदं सुवर्णभाण्डं।

विदू। भो वअस्स, साविदोसि गोवह्मणकामाए, जइ एदं सुवसभण्डअं ण गेह्णसि (१)।

शर्वि। अनतिक्रमणीया भगवती गोकाम्या ब्राह्मणकाम्या च ॥ गृह्णाति॥ अथवा, ज्वलति प्रदीपः। अस्ति च मया प्रदीप निर्वापणार्थमाग्नेयः कीटोधार्य्यते; तन्तावत्प्रवेशयामि ॥ तथा कृत्वा॥ अये निर्व्वापितः प्रदीपः। तस्यायन्देशकालएष मुक्तो मया कीटोयालेवास्य दीपस्योपरि मण्डलं विचरति, एष पक्षद्वयानिलेन निर्वापितोभद्रपीठेन। धिक्कृतमन्धकारं, अथवा, मयापि अस्मद्ब्राह्मणकुले, धिक्कृतमन्धकारं। अहं हि चतुर्व्वेदविदोऽप्रतिग्राहकस्य पुत्रः, शर्विलकोनाम, ब्राह्मणो, गणिकामदनिकार्थमकार्य्यमनुतिष्ठामि। इदानीङ्करोमि ब्राह्मणस्य प्रणयमिति ॥ जिघृक्षति ॥

विदू। भो वअस्स, सीदलो दे अग्गहत्थो (२)।

शर्वि। धिक् प्रमादः! सलिलसंपर्काच्छीतलोमेऽग्रहस्तः। भवतु, कक्षयोर्हस्तं प्रक्षिपामि ॥ नाट्येन सव्यहस्तमुष्णीकृत्य गृह्णाति॥

विदू। गहिदं (३)।

---

(१) भो वयस्य, शापितोऽसि गोब्राह्मणकाम्यया, यदि एतत् सुवर्णभाण्डं न गृह्णासि।

(२) भो वयस्य, शीतलस्ते अग्रहस्तः।

(३) गृहीतं।

शर्वि। अनतिक्रमणीयोऽयं ब्राह्मणप्रणयः। तद्गृहीतं।

विदू। दाणीं विक्किणिदपण्णो विअ वाणिओ, अहं सुहं सुविस्सं(१)।

शर्वि। महाब्राह्मण, स्वपिहि वर्षशतं। कष्टमेवं मदनिकागणिकार्थे ब्राह्मणकुलं तमसि पातितं। अथवा, आत्मा पातितः।

धिगस्तु खलु दारिद्र्यमनिर्वेदितपौरुषं,
यदेतद्गर्हितं कर्म्म निन्दामि च, करोमि च।

तद्यावन्मदनिकायानिष्क्रयणार्थं वसन्तसेनागृहङ्गच्छामि ॥ परिक्रम्यावलोक्य च ॥ अये, पदशब्द इव मा नाम रक्षिणः। भवतु, स्तम्भोभूत्वा तिष्ठामि। अथवा ममापि नाम शर्विलकस्य रक्षिणः। योऽहं।

मार्जारः क्रमणे, मृगः प्रसरणे, श्येनो गृहालुञ्चने,
सुप्तासुप्तमनुष्यवीर्य्यतुलने श्वा, सर्पणे पन्नगः।
मायारूपशरीरवेशरचने, वाग्देशभाषान्तरे,
दीपोरात्रिषु, सङ्कटेषु डुडुभो, वाजी स्थले, नौर्जले।

अपिच।

भुजग इव गतौ, गिरिः स्थिरत्वे, पतगपतेः परिसर्पणे च तुल्यः।
शश इव भुवनावलोकनेऽहं, वृक इव च ग्रहणे, बले च सिंहः।

---

(१) इदानीं विक्रीतपण्य इव वणिक् अहं सुखं स्वप्स्यामि।

॥ प्रविश्य रदनिका ॥ हद्धी, हद्धी; बाहिरदुआरशालाए पसुत्तो वड्ढमाणओ, सोवि एत्थ ण दीसइ। भोदु; अज्जमित्तेअं सद्दावेमि (१) ॥ इति परिक्रामति ॥

शर्वि ॥ रदनिकां हन्तुमिच्छति निरूप्य॥ कथं स्त्री? भवतु गच्छामि ॥ इति निष्क्रान्तः ॥

रद ॥ गत्वा सत्रासं॥ हद्धी, हद्धी; अह्माणं गेहे सन्धिं कप्पिअ चोरो णिक्कमति। भोदु, मित्तेअं गदुअ पबोधेमि ॥विदूषकमुपगम्य॥ अज्ज मित्तेअ, उट्ठेहि, उट्ठेहि; अह्माणं गेहे सन्धिं कप्पिअ चोरो णिक्कन्तो (२)।

विदू ॥उत्थाय॥ आः दासीए धीए, किं भणासि; चोरो कप्पिअ सन्धिं णिक्कन्तो (३)।

(१) हा धिक्, हा धिक्, बहिर्द्वारशालायां प्रसुप्तो वर्द्धमानकः, सोऽप्यत्र न दृश्यते; भवतु, आर्य्यं मैत्रेयं आह्वयामि।

(२) हाधिक्, हाधिक्, अस्माकं गृहे सन्धिं कर्त्तयित्वा, चौरो निष्क्रामति। भवतु, मैत्रेयं गत्वा प्रबोधयामि। आर्य्य मैत्रेय, उत्तिष्ठ, उत्तिष्ठ; अस्माकं गेहे सन्धिं कर्त्तयित्वा, चौरो निष्क्रान्तः।

(३) आः दास्याः पुत्रिके; किं भणसि; चौरः कल्पयित्वा सन्धिं निष्क्रान्तः।

रद। हदास, अलं परिहासेण, किं ण पेक्खसि एणं(१)।

विदू। आः दासीए धीए, किं भणासि; दुदिअं विअ दुआरअं उद्घाडिदत्ति। भो वअस्स चारुदत्त, उट्ठेहि, उट्ठेहि; अह्माणं गेहे सन्धिं दइअ चोरो णिक्कन्तो (२)।

चारु। भवतु, भोः, अलं परिहासेन।

विदू। भो ण परिहासो, पेक्खदु भवं (३)।

चारु। कस्मिन्नुद्देशे।

विदू। भो, एसो (४)।

चारु ॥ विलोक्य ॥ अहोदर्शनीयोऽयं सन्धिः।

उपरितलनिपातितेष्टकोऽयं
शिरसि तनुर्विपुलश्च मध्यदेशे,
असदृशजनसम्प्रयोगभीरो,
हृदयमिव स्फुटितं महागृहस्य।

कथमस्मिन्नपि कर्म्मणि कुशलता।

---

(१) हताश किं न अलं परिहासेन, किं न प्रेक्षसे एतत्।

(२) आः दास्याः पुत्रिके; किं भणसि, द्वितीयमिव द्वारं उद्घाटितमिति। भो वयस्य, चारुदत्त, उत्तिष्ट, उत्तिष्ठ; अस्माकं गेहे सन्धिं दत्वा चौरोनिष्क्रान्तः।

(३) भो न परिहासः, प्रेक्षतां भवान्।

(४) भो एषः।

विदू। भो वअस्स, अअं सन्धी दुवेहिं जेव्व दिषो भवे; आदु, आगन्तुएण, सिक्खिदुकामेण वा। अण्णधा इध उज्जइणीए को अह्माणं घरं विहवं ण आणादि (१)।

चारु। वैदेश्येन कृतो भवेन्मम गृहे व्यापारमभ्यस्यता
नासौ वेदितवान्धनैर्विरहितं विस्रब्धसुप्तं जनं।
दृष्ट्वा प्राङ्महतीं निवासरचनामस्माकमाशान्वितः,
सन्धिच्छेदनखिन्नएव सुचिरं पश्चान्निराशो गतः। (१७)

ततः सुहृद्भ्यः किमसौ कथयिष्यति तपस्वी। सार्थवाहसुतस्य गृहं प्रविश्य न किञ्चिन्मया समासादितमिति।

विदू। भो, कधं तं जेव्व चोरहदअं अणुसोचेमि। तेण चिन्तिदं महन्तं एदं गेहं, इदो रअणभण्डअं, सुवण्णभण्डअं, वा, णिक्कामइस्सामि ॥स्मृत्वा सविषादमात्मगतं॥ कहिं तं सुवण्णभण्डअं ॥पुनरनुस्मृत्य प्रकाशं॥ भो वअस्स, तुमं सव्वकालं भणासि, मुक्खो मित्तेअओ, अपण्डिदो मित्तेअओत्ति; सुट्ठु मए कदं, तं सुवण्णभण्डअं भवदो हत्थे समप्पअन्तेण, अण्णधा दासीए पुत्तेण अवहदं भवे (२)।

(१) भो वयस्य, एष सन्धिर्द्वाभ्यामेव दत्तो भवेत्। अथवा आगन्तुकेन, शिक्षितुकामेन, वा, अन्यथा अत्रोज्जयिन्यां कोऽस्माकं गृहं विभवं न जानाति।

(२) भो कथं तमेव चौरहतकमनुशोचामि; तेन चिन्तितं, महदेतद्गृहं, इतो रत्नभाण्डं सुवर्णभाण्डम्वा निष्क्रामयिष्यामि

चारु। अलं परिहासेन।

विदू। भो, जइ णाम अहं मुक्खो, किं ता परिहासस्स वि देसआलं ण आणामि (१)।

चारु। कस्यां वेलायां।

विदू। भो जदा तुमं मए भणिदोसि, सीदलो दे अग्गहत्थो (२)।

चारु। कदाचिदेवमपि स्यात् ॥ सर्व्वतोनिरूप्य सहर्षं ॥ वयस्य, दिष्ट्या ते प्रियं निवेदयामि।

विदू। किं ण अवहृदं (३)।

चारु। हृतं।

विदू। तधावि किं पियं (४)।

चारु। यदसौ कृतार्थोगतः।

---

कुत्र तत् सुवर्णभाण्डकं। भो वयस्य, त्वं सर्व्वकालं भणसि, मूर्खो मैत्रेय, अपण्डितः मैत्रेयइति, सुष्ठु कृतं मया, तत्सुवर्णभाण्डं भवतोहस्ते समर्पयता, अन्यथा दास्याः पुत्रेणापहृतं भवेत्।

(१) भो, यथा नामाहं मूर्खस्तत्किं परिहासस्य अपि देशकालं न जानामि।

(२) भो, यदा त्वं मया भणितोऽसि, शीतलस्ते अग्रहस्तः।

(३) किं नापहृतं।

(४) तथापि किं प्रियं।

विदू। णासो क्खु सो (१)।

चारु। कथं न्यासः ॥ मोहमुपगतः ॥

विदू। समस्ससदु भवं। जइ णासो चोरेण अवहदो तुमं वि किं मोहमुपगदो (२)।

चारु ॥ समाश्वस्य॥ वयस्य,

कः श्रद्धास्यति, भूतार्थं सर्व्वोमां तुलयिष्यति;
शङ्कनीयाहि लोकेस्मिन्निःप्रतापा दरिद्रता। २०

भोः कष्टं,

यदि तावत्कृतान्तेन प्रणयोऽर्थेषु मे हृतः,
किमिदानीं नृशंसेन चारित्रमपि दूषितं। २१

विदू। अहं खु अवलविस्सं। केण दिण्णं? केण गहिदं? को वा सक्खित्ति? (३)।

चारु। अहमिदानीमनृतमभिधास्ये?
भैक्ष्येणाप्यर्जयिष्यामि पुनर्न्यासप्रतिक्रियां,
अनृतं नाभिधास्यामि चारित्रभ्रंशकारणं। २२

---

(१) न्यासः खलु सः।

(२) समाश्वसितु भवान्, यदि न्यासश्चोरेणापहृतः, त्वमपि किं मोहमुपगतः।

(३) अहं खलु अपलपिष्यामि; केन दत्तं? केन गृहीतं? कोवा साक्षीति?

रद। ता जाव अज्जाधूदाए गदुअ णिवेदेमि (१)
॥ इति निष्क्रान्ता ॥

॥ प्रविश्य ॥ चेट्या सह चारुदत्तवधूः।

वधूः ॥ससम्भ्रमं॥ अइ सच्चं अवरिक्खदसरीरो अज्ज उत्तो, अज्जमित्तेएण सह (२)।

चेटी। भट्टिणि, सच्चं; किंतु जो सो वेसाजणकेरको अलंकारओ सो अवहदो (३)।

वधूः ॥ मोहं नाटयति ॥

चेटी। समस्ससदु अज्जा धूदा (४)।

वधूः ॥समाश्वस्य॥ हज्जे किं भणासि, अवरिक्खदसरीरो; अज्जउत्तोत्ति। वरं दाणिं सो सरीरेण परिक्खदो ण उण चारित्तेण। संपदं, उज्जइणीए जणो एव्वं मन्तइस्सदि, दलिद्ददाए अज्जउत्तेण जेव्व ईदिसं अकज्जं अनुचिट्ठिदंत्ति। ॥ऊर्द्ध्वमवलोक्य निश्वस्य च॥ भअवं कअन्त, पोक्खरवत्तपडिद जलविन्दुचञ्चलेहिं कीलसि दलिद्दपुरिसभाअधेएहिं। इअं च मे एक्का मादुघरलद्धा रअणावली चिट्ठदि। एदं पि

(१) तत् यावत् आर्य्या धूतायै गत्वा निवेदयामि।

(२) अयि सत्यं, अपरिक्षतशरीरः आर्य्यपुत्रः, आर्य्य मैत्रेयेण सह।

(३) स्वामिनि सत्यं, किन्तु यः स वेश्याजनस्यालङ्कारः सोऽपहृतः।

(४) समाश्वसितु आर्य्या धूता।

अदिशोण्डीरदाए अज्जउत्तो ण गेह्लिस्सदि। हञ्जे, अज्ज मित्तेअं दाव सद्दावेहि (१)।

चेटी। जं अज्जा धूदा आणवेदि ॥ विदूषकमुपगम्य॥ अज्ज मित्तेअ, धूदा दे सद्दावेदि (२)।

विदू। कहिं सा (३)।

चेटी। एसा चिट्ठदि; उवसप्प (४)।

विदू ॥ उपसृत्य॥ सोत्थि भोदीए (५)।

वधूः। अज्जं वन्दामि; अज्ज पुरत्थिआमुहो होहि (६)।

---

(१) चेटि, किं भणसि; अपरिक्षत शरीरः आर्य्यपुत्र इति। वरं,इदानीं स शरीरेण परिक्षतो न पुनश्चारित्रेण। साम्प्रतमुज्जयिन्यां जनएवं मन्त्रयिष्यति, दरिद्रतया आर्य्य पुत्रेणैव ईदृशमकार्य्यं अनुष्ठितं। भगवन् कृतान्तपुष्करपत्र पतितजलविन्दुचञ्चलैः क्रीडसि दरिद्रपुरुषभागधेयैः। इयञ्च मे एका मातृगृहलब्धा रत्नावली तिष्ठति। एतामपि अति शौण्डीरतया आर्य्यपुत्रोन ग्रहीष्यति। चेटि, आर्य्य मैत्रेयं तावदाह्वय।

(२) यत् आर्य्या धूता आज्ञापयति। आर्य्य मैत्रेय, धूता त्वामाज्ञापयति।

(३) कुत्र सा।

(४) एषा तिष्ठति, उपसर्प्प।

(५) स्वस्ति भवत्याः।

(६) आर्य्यं वन्दे। आर्य्य पुरस्तान्मुखोभव।

विदू। एष भोदि पुरत्थिआमुहो संवुत्तोह्मि (१)।

वधूः। अज्ज पडिच्छ इमं (२)।

विदू। किं णेदं (३)।

वधूः। अहं खु रअणछट्ठिं उववसिदा आसिं, तहिं जधा विहवाणुसारेण वह्मणोपडिग्गाहिदव्वो, सो अण्णपडिग्गहिदो, ता तस्स कदे पडिछ इमं रअणमालिअं (४)।

विदू ॥ गृहीत्वा ॥ सोत्थि; गमिस्सं पिअवअस्सस्स णिवेदेमि (५)।

वधूः। अज्ज मित्तेअ, मा खु मं लज्जावेहि (६)॥ इति निष्क्रान्ता॥

विदू ॥ सविस्मयं ॥ अहो से महाणुभावदा (७)।

---

(१) एष भवति पुरस्तान्मुखः सम्वृत्तः।

(२) आर्य्य गृह्णातु इमां।

(३) किं न्वेदं।

(४) अहं खलु रत्नषष्ठी उपोषिता आसं; तत्र यथाविभवानुसारेण ब्राह्मणः प्रतिग्राहितव्यः, सः अन्यत्र प्रतिग्राहितः, तत् तस्य कृते प्रतीच्छ इमां रत्नमालिकां।

(५) स्वस्ति; गमिष्यामि प्रियवयस्यस्य निवेदयामि।

(६) आर्य्य मैत्रेय, मा खलु मां लज्जितां कुरु।

(७) अहो अस्या महानुभावता।

चारु। अये चिरयति मैत्रेयः। मा नाम वैक्लव्यादकार्यं कुर्यात्। मैत्रेय, मैत्रेय।

विदू ॥ उपसृत्य ॥ एसोह्मि; गेह्न एदं (१) ॥ रत्नावलीं दर्शयति ॥

चारु। किमेतत्।

विदू। भो, जं दे सरिसदारसङ्गहस्स फलं (२)।

चारु। कथं, ब्राह्मणी मामनुकम्पते। कष्टमिदानीमस्मि दरिद्रः।

आत्मभाग्यक्षतद्रव्यः स्त्रीद्रव्येणानुकम्पितः;
अर्थतः पुरुषोनारी या नारी सार्थतः पुमान्। २७

अथवा। नाहं दरिद्रः। यस्य मम,

विभवानुगता भार्य्या, सुखदुःखसुहृद्भवान्,
सत्यञ्च न परिभ्रष्टं, यद्दरिद्रेषु दुर्लभं। २८

मैत्रेय, गच्छ रत्नावलीमादाय वसन्तसेनायाः सकाशं वक्तव्या च सा मद्वचनात्। यत्खल्वस्माभिः सुवर्णभाण्ड मात्मीयमिति कृत्वा विस्रम्भात् द्यूते हारितं, तस्य कृते गृह्य तामियं रत्नावलीति।

---

(१) एषोऽस्मि; गृहाण एतां।

(२) भो यत् ते सदृशं दारसंग्रहस्य फलं।

विदू। मा दाव, अक्खाइदस्स, अभुत्तस्स, अप्पमुल्लस्स, चोरेहिं अवहृदस्स, कारणादो, चदुस्समुद्दसारभूदा रअणावली दीअदि (१)।

चारु। वयस्य मामैवं।

यं समालम्ब्य विश्वासं न्यासोऽस्मासु तया कृतः,
तस्यै तन्महतोमूल्यं प्रत्ययस्यैव दीयते। |26|

तद्वयस्य, अस्मच्छरीरस्पृष्टिकया शापितोऽसि, नैनामग्रा हयित्वात्रागन्तव्यं। वर्द्धमानक, एताभिरिष्टिकाभिः सन्धिः क्रियतां सुसंहतः शीघ्रं। परिवादबहलदोषान्न यस्य रक्षां परिहरामि। वयस्य मैत्रेय, भवताप्यकृपणशौण्डीर्य्यमभिधातव्यं।

विदू। भो दलिद्दो किं अकिविणं मन्तेदि (२)।

चारु। अदरिद्रोऽस्मि सखे। यस्य मम ॥विभवानुगता भार्य्येत्यादि पुनः पठति॥ तद्गच्छतु भवान्। अहमपि कृतशौचः सन्ध्यामुपासे ॥ इति निष्क्रान्ताः सर्व्वे ॥

संधिच्छेदोनाम तृतीयोऽङ्कः समाप्तः।

---

(१) मा तावत्, अखादितस्य, अभुक्तस्य, अल्पमूल्यस्य चौरैरपहृतस्य कारणात्, चतुःसमुद्रसारभूता रत्नावली दीयते।

(२) भो दरिद्रः किं अकृपणं मन्त्रयति।

## ॥ अथ चतुर्थोऽङ्कः ॥

---

ततः प्रविशति चेटी। चेटी। आणत्तह्मि अत्ताए, अज्जआस आसं गन्तुं। एसा अज्जआ चित्तफलहणिसण्णदिट्ठीमदणिआए सह किंपि मन्तअन्ती चिट्ठदि, ता जाव उवसप्पामि (१)। ॥ इति परिक्रामति॥

॥ ततः प्रविशति यथानिर्द्दिष्टा वसन्तसेना मदनिका च ॥

वसं। हञ्जे मअणिए, अवि सुसदिसी इअं चित्ताकिदी अज्जचारुदत्तस्स (२)।

मद। सुसदिसी (३)।

वसं। कधं तुमं जानासि (४)।

मद। जेण अज्जआए सुसिणिद्धा दिट्ठी अणुलग्गा (५)।

---

(१) आज्ञप्तास्मि मात्रा आर्य्यायाः सकाशं गन्तुं। एषा आर्य्या चित्रफलकनिषण्णदृष्टिर्म्मदनिकया सह किमपि मन्त्रयन्ती तिष्ठति। तत् यावत् उपसर्पामि।

(२) चेटि मदनिके, सुसदृशी इयं चित्राकृतिः आर्य्यचारुदत्तस्य।

(३) सुसदृशी।

(४) कथं त्वं जानासि।

(५) येन आर्य्यायाः सुस्निग्धा दृष्टिरनुलग्ना।

वसं हञ्जे, किं वेसवासदक्खिणेण मश्रणिए एव्वं भणामि (१)।

मद। अज्जए, किं जो जेव्व जणो वेसे पडिवसदि, सो जेव्व अलीअदक्खिणो भोदि (२)।

वसं। हञ्जे, णाणापुरिससङ्गेण वेसाजणो अलिअदक्खिणो भोदि (३)।

मद। जदो दाव अज्जआए दिट्ठी दूध अभिरमदि, हिअअं च। तस्स कारणं किं पुच्छीअदि (४)।

वसं। हञ्जे, सहीअणादो उवहसणीअदां दिक्खामि (५)।

मद। अज्जए एवं णेदं। सहीजणचित्ताणुवत्ती अवला अणो भोदि (६)।

(१) चेटि, किं वेश्रवासदाचिण्येण मदनिके एवं भणामि।

(२) आर्य्ये, किं यएव जनोवेश्मे प्रतिवसति सएव अलीक दाचिण्योभवति।

(३) चेटि, नानापुरुषसङ्गेन वेश्याजनः अलीकदाचिण्यो भवति।

(४) यतस्तावत् आर्य्यायाहृष्टिः दूयं अभिरमते, हृदयञ्च। तस्य कारणं किं पृच्छ्यते।

(५) चेटि सखीजनादुपहसनीयतां द्रच्यामि।

(६) आर्य्ये, एवं नेदं सखीजनचित्तानुवर्त्ती अवलाजनो भवति।

प्रथमा चेटी ॥ उपसृत्य॥ अज्जए अत्ता आणवेदि। गहि
दावगुण्ठणं पक्खदुआरए सज्जं पवहणं ता गच्छेत्ति (१)।

वसं। हञ्जे, किं अज्जचारुदत्तो मं णइस्सदि (२)।

चेटी। अज्जए, जेण पवहणेण सह सुवण्णदससाहस्सिओ
अलङ्कारओ अणुप्पेसिदो (३)।

वसं। को उण सो (४)।

चेटी। एसो जेव्व राअसालसंठाणो (५)।

वसं ॥ सक्रोधम्॥ अवेहि; मा पुणो एव्वं भणिस्ससि (६)।

चेटी। पसीददु, पसीददु; अज्जआ सन्देसेणह्मि पेसिदा (७)।

वसं। अहं सन्देसस्स जेव्व कुप्पामि (८)।

(१) आर्य्ये माता आज्ञापयति, गृहीतावगुण्ठनं पक्ष
द्वारे सज्जं प्रवहणं, ता गच्छेति।

(२) चेटि, किं आर्य्य चारुदत्तो मां नेष्यति।

(३) आर्य्ये, येन प्रवहणेन सह सुवर्णदशसाहस्रिकः अल
ङ्कारः अनुप्रेषितः।

(४) कः पुनः सः।

(५) एषएव राजश्यालकसंस्थानः।

(६) अपेहि, मा पुनरेवं भणिष्यति।

(७) प्रसीदतु, प्रसीदतु आर्य्या, सन्देशेनास्मि प्रेषिता।

(८) अहं सन्देशस्यैव कुप्यामि।

चेटी। ता किंति अत्तं विण्णविस्सं (१)।

वसं। एव्वं विण्णद्दव्वा; जं मं जीअंतीमिच्छसि, ता एव्वं ण पुणो अहं अत्ताए आणाविदव्वा (२)।

चेटी। जधा दे रोअदि (३)।

॥ इति निष्क्रान्ता ॥ प्रविश्य शर्विलकः।

दत्वा निशायावचनीयदोषं, निद्रांश्च जित्वा नृपतेश्च रक्ष्यान्,
स एष सूर्योदयमन्दरश्मिः चपाचयाचन्द्रइवास्मि जातः। |१|

अपिच।

यः कश्चित्त्वरितगतिर्निरीक्षते मां,
संभ्रान्तं, द्रुतमुपसर्पति स्थितं वा;
तं सर्वं तुलयति दूषितोऽन्तरात्मा;
स्वैर्दोषैर्भवति हि शंकितोमनुष्यः। |२|

मया खलु मदनिकायाः कृते साहसमनुष्ठितम्।

परिजनकथासक्तः कश्चिन्नरः समुपेक्षितः,
क्वचिदपि गृहं नारीनाथं निरीक्ष्य विवर्त्तितम्,
नरपतिबले पार्श्वायाते स्थितं गृहदारुवत्
व्यवसितशतैरेवंप्रायैर्निशा दिवसीकृता। |३|

॥ इति परिक्रामति ॥

---

(१) तत्किमिति मातरं विज्ञापयिष्यामि।

(२) एवं विज्ञापयितव्या, यदि मां जीवतीमिच्छसि, तदा एवं न पुनरहं मात्रा आज्ञापयितव्या।

(३) यथा ते रोचते।

वसं। हञ्जे, इमन्दाव चित्तफलअं मम सअणीए ठाविअ, तालवेण्टअं गेह्णिअ लहुं आअच्छ (१)।

मद। आं; जं अज्जआ आणवेदि (२) ॥ इति फलकं गृहीत्वा निष्क्रान्ता ॥

शर्वि। इदं वसन्तसेनायागृहं तद्यावत्प्रविशामि ॥ प्रविश्य क्व मदनिका द्रष्टव्या ॥ ततः प्रविशति तालवृन्तहस्ता मदनिका;

शर्वि। दृष्ट्वा अये, इयं मदनिका।

मदनमपि गुणैर्विशेषयन्ती रतिरिव मूर्त्तिमती विभाति येयम्;
मम हृदयमनङ्गवह्नितप्तं, भृशमिव चन्दनशीतलङ्करोति।

मदनिके।

मद ॥ दृष्ट्वा ॥ अम्मो, कधं, सव्विलऊ; सव्विलअ साअदन्दे, कहिं तुमं (३)।

शर्वि ॥ कथयिष्यामि॥ इति सानुरागमन्योन्यं पश्यतः।

वसं। चिरअदि मदणिआ, ता कहिं णुउ सा ॥ गवाक्षकेण दृष्ट्वा ॥ कधं, एसा केनावि पुरिसकेण सह मन्तअन्ती चिट्ठदि। जधा अदिसिणिद्धाए णिच्चलदीट्ठिए आपिवन्ती विअ,

---

(१) चेटि, इमं तावत् चित्रफलकं मम शयनीये स्थापयित्वा, तालवृन्तं गृहीत्वा, लघु आगच्छ।

(२) आं; यदार्य्या आज्ञापयति।

(३) कथं शर्व्विलकः। शर्व्विलक, स्वागतं ते; कुत्र त्वं।

एदं णिज्झाअदि। तधा तक्केमि, एसो सो जणो एदं इच्छदि अभुजिस्सं कादुं; ता रमदु, रमदु; मा कस्सवि पीदिच्छेदो भोदु, ण क्खु सद्दाविस्सं (१)।

मद। सव्विलअ कधेहि (२)।

शर्वि ॥ साशङ्कं दिशोऽवलोकयति ॥

मद। सव्विलअ, किं णेदं ससंको विअ लक्खीअसि (३)।

शर्वि। वक्ष्ये त्वां किञ्चिद्रहस्यं, तद्विविक्तमिदं।

मद। अधइं (४)।

वसं। कधं परमरहस्सं, ता ण सुणिस्सं (५)।

(१) चिरयति मदनिका, तत्कुत्र नु खलु सा। कथं, एषा केनापि पुरुषकेण सह मन्त्रयन्ती तिष्ठति। यथा अतिस्निग्धया निश्चलदृष्ट्या आपिबन्तीव एवं निर्ध्यायति। तथा तर्कयामि, एष सजनः एनामिच्छति अभुजिष्यां कर्त्तुं; तत् रमतां, रमतां; मा कस्यापि प्रीतिच्छेदो भवतु, न खलु आकारयिष्यामि।

(२) शर्व्विलक, कथय।

(३) शर्व्विलक, किं नेदं सशङ्क इव लक्ष्यसे।

(४) अथ किं।

(५) कथं परमरहस्यं तत् न श्रोष्यामि।

शर्वि। मदनिके, किं वसन्तसेना मोक्ष्यति त्वां निःक्रयेण।

वसं। कधं मत्संबन्धिणी कधा, ता सुणिस्सं, इमिणा गवक्खेण ऊवारिदसरीरा (१)।

मद। सव्विलअ, भणिदा मए अज्जआ; तदो भणादि, जइ मम सच्छन्दो तदा बिणा अत्थं च सव्वं परिअणं अभुजिस्सं करइस्सं। अध सव्विलअ, कुदो दे एत्तिओ विहवो, जेण मं अज्जआसआसादो मोआइस्ससि (२)।

शर्वि। दारिद्र्येणाभिभूतेन त्वत्स्नेहानुगतेन च

अद्य रात्रौ मया, भीरु, त्वदर्थे साहसं कृतम्। ।४

वसं। पसणा से आकिदी साहसकम्मदाए उण उव्वेअणीआ (३)।

मद। सव्विलअ, इत्थीकल्लवत्तस्स कालणेण उहअं पि संसए विणिक्खित्तं (४)।

---

(१) कथं मत्सम्बन्धिनी कथा, तत् श्रोष्यामि अनेन गवाक्षेण निवारितशरीरा।

(२) शर्व्विलक, भणिता मया आर्य्या। तदा भणति, यदि मम स्वच्छन्दः तदा विना अर्थञ्च सर्व्वं परिजनं अभुजिष्यं करिष्यामि। अथ शर्व्विलक, कुतस्ते एतावान् विभवः येन मामार्य्यासकाशात् मोचयिष्यसि।

(३) प्रसन्नास्याकृतिः साहसकर्मतया पुनरुद्वेजनीया।

(४) शर्व्विलक, स्त्रीकल्यवर्त्तस्य कारणेन उभयमपि संशये विनिक्षिप्तं।

शर्वि। किं, किं।

मद। सरीरं, चारित्तञ्च (१)।

शर्वि। अपण्डिते, साहसे श्रीः प्रतिवसति।

मद। सव्विलअ, अखण्डिदचारित्तोसि; ता णहु दे मम कारणादो साहसं करन्तेण अच्चंतविरुद्धमाअरितं (२)।

शर्वि। नो मुष्णाम्यबलां विभूषणवतीं फुल्लामिवाहं लतां,

विप्रस्वं न हरामि काञ्चनमथो यज्ञार्थमभ्युद्धृतम्;

धात्र्युत्सङ्गगतं हरामि न तथा बालं धनार्थी क्वचित्,

कार्य्याकार्य्यविचारिणी मम मतिश्चौर्येऽपि नित्यं स्थिता। ८

तद्विज्ञाप्यतां वसन्तसेना।

अयं तव शरीरस्य प्रमाणादिव निर्मितः,

अप्रकाशो ह्यलंकारो मत्स्नेहाद्धार्य्यतामिति।

मद। सव्विलअ, अप्पकासो अलंकारो, अयञ्च जणो, त्ति दुवेवि ण जुज्जदि; ता उवणेहि दाव पेक्खामि, दाव एदं अलंकारअं (३)।

---

(१) शरीरं चारित्रञ्च।

(२) शर्व्विलक, अखण्डितचरित्रोऽसि; तत् नहि त्वया मम कारणात् साहसं कुर्व्वता अत्यन्तविरुद्धमाचरितं।

(३) शर्व्विलक, अप्रकाशोऽलङ्कारः, अयञ्च जनः, इति द्वयमपि न युज्यते; तत उपनय तावत् पश्यामि तावत् तत् अलङ्कारं।

शर्वि। इदमलङ्करणं ॥इति साशङ्कं समर्पयति॥

मद ॥निरूप्य॥ दिट्ठपुरुव्वोविश्र श्रश्रं श्रलंकारश्रो; ता भणेहि कुदो दे एसो (१)।

शर्वि। मदनिके, किं तवानेन? गृह्यतां।

मद ॥सरोषम्॥ जइ मे पच्चश्रं ण गच्छसि, ता किं णिमित्तं मं णिक्किणसि (२)।

शर्वि। अयि, प्रभाते मया श्रुतं श्रेष्ठिचत्वरे यथा सार्थवाहस्य चारुदत्तस्येति ॥वसन्तसेना मदनिका च मूर्छां नाटयतः॥

शर्वि। मदनिके, समाश्वसिहि, किमिदानीं त्वं,

विषादस्रस्तसर्वाङ्गी संभ्रमभ्रान्तलोचना,

नीयमानाभुजिष्या त्वं कम्पसे नानुकम्पसे।

मद ॥समाश्वस्य॥ साहसिश्र, ण क्खु तुए मम कारणादो इमं श्रकज्जं करन्तेण, तस्सिं गेहे कोवि वावादिदो, परिक्खदो वा (३)।

---

(१) दृष्टपूर्व इवायमलङ्कारः; तद्भण कुतस्ते एषः।

(२) यदि मे प्रत्ययं न गच्छसि, तत् किं निमित्तं मां निष्क्रीणासि।

(३) साहसिक, न खलु त्वया मम कारणात् इदं श्रकार्य्यं कुर्व्वता, तस्मिन् गेहे कोऽपि व्यापादितः परिक्षतो वा।

शर्वि। मदनिके, भीते सुप्ते न शर्विलकः प्रहरति तन्मया न कश्चिद्व्यापादितोनापि परिचतः।

मद। सच्चं (१)।

शर्वि। सत्यं, सत्यं।

वसं ॥ सञ्ज्ञां लब्ध्वा ॥ अम्महे पच्चुपजीविदह्मि (२)।

मद। पिअं (३)।

शर्वि ॥ सेर्ष्यं ॥ मदनिके, किं नाम प्रियमिति।

त्वत्स्नेहबद्धहृदयोहि करोम्यकार्य्यं,
सद्वृत्तपूर्व्वपुरुषेऽपि कुले प्रसूतः;
रक्षामि मन्मथविपन्नगुणोऽद्य मानं
मित्रञ्च मां व्यपदिशस्यपरञ्च यासि

॥ साकूतम् ॥

इह सर्व्वस्वफलिनः कुलपुत्रमहाद्रुमाः
निष्फलत्वमलं यान्ति वेश्याविहगभक्षिताः;
अयञ्च सुरतज्वालः कामोऽग्निः प्रणयेन्धनः
नराणां यत्र हूयन्ते यौवनानि धनानि च। ७।८

वसं ॥ सस्मितं॥ अहो से अत्थाणे आवेओ (४)।

---

(१) सत्यं।

(२) आश्चर्य्यं; प्रत्युपजीवितास्मि।

(३) प्रियं।

(४) अहो अस्य अस्थाने आवेशः।

शर्वि। सर्व्वथा।

अपण्डितास्ते पुरुषा मता मे, ये स्त्रीषु च श्रीषु च विश्वसन्ति,
श्रियोहि कुर्व्वन्ति तथैव नार्य्यो भुजङ्गकन्यापरिसर्पणानि,।
स्त्रीषु न रागः कार्य्यो; रक्तं पुरुषं स्त्रियः परिभवन्ति;
रक्तैव हि रन्तव्या विरक्तभावा नु हातव्या।

सुष्ठु खल्विदमुच्यते।

एता हसन्ति च रुदन्ति च वित्तहेतो
र्विश्वासयन्ति पुरुषं न तु विश्वसन्ति।
तस्मान्नरेण कुलशीलसमन्वितेन,
वेश्याः श्मशानसुमना इव वर्जनीयाः। ११

अपिच।

समुद्रवीचीव चलस्वभावाः, सन्ध्याभ्रलेखेव मुहूर्त्तरागाः,
स्त्रियो हृतार्थाः पुरुषं निरर्थं, निःपीडितालक्तकवत्त्यजन्ति।

स्त्रियोनाम चपलाः।

अन्यं मनुष्यं हृदयेण कृत्वा, अन्यं ततो दृष्टिभिराह्वयन्ति;
अन्यत्र मुञ्चन्ति मदप्रसेकमन्यं शरीरेण च कामयन्ते। १२

सूक्तं खलु कस्यापि।

न पर्वताग्रे नलिनी प्ररोहति, न गर्दभा वाजिधुरं वहन्ति,
यवाः प्रकीर्णा न भवन्ति शालयो, न वेशजाताः शुचयस्तथाङ्गनाः।

आः दुरात्मन् चारुदत्तहतक, अयं न भवसि॥ कतिचित्पदानि ददाति॥

मद ॥ अञ्चले गृहीत्वा ॥ अइ असंबद्धभासअ, असं भावणीए कुप्पसि (१)।

शर्वि। कथमसम्भावनीयं नाम।

मद। एसो खु अलङ्कारओ अज्जआ केरओ (२)।

शर्वि। ततः किम्।

मद। सच तस्स अज्जस्स हत्थे विणिक्खित्तो (३)।

शर्वि। किमर्थम्।

मद ॥ कर्णे ॥ एव्वं विअ (४)।

शर्वि ॥ सवैलक्ष्यम् ॥ भोः कष्टम्।

छायार्थं ग्रीष्मसन्तप्तो यामेवाहं समाश्रितः,

अजानता मया, सैव पत्रैः शाखा वियोजिता।

वसं। कधं एसोवि सन्तप्पदि ज्जेव्व। ता, अआणन्तेण एदिणा एव्वमणुचिट्ठिदं (५)

(१) अयि असम्बद्धभाषक, असम्भावनीयं कुप्यसि।

(२) एष खलु अलङ्कारः आर्य्यया कृतः।

(३) सच तस्य आर्य्यस्य हस्ते विनिःक्षिप्तः।

(४) एवमिव।

(५) कथमेष सन्ताप्यते एव; तत् अजानता एतेन एव मनुष्ठितं।

शर्वि। मदनिके, किमिदानीं युक्तम्।

मद। एत्थ तुमं ज्जेव्व पण्डिओ (१)।

शर्वि। नैवम्। पश्य।

स्त्रियोहि नाम खल्वेतानिसर्गादेव पण्डिताः,
पुरुषाणान्तु पाण्डित्यं शास्त्रैरेवोपदिश्यते।

मद। सव्विलअ, जइ मम वअणं सुणीअदि, ता तस्स ज्जेव्व महाणुभावस्स पडिणिज्जादेहि (२)।

शर्वि। मदनिके, यद्यसौ राजकुले मां कथयति।

मद। ण चन्दादो आदवो होदि (३)।

वसं। साऊ, मअणिए, साऊ (४)।

शर्वि। मदनिके।

न खलु मम विषादः, साहसेऽस्मिन् भयम्वा,
कथयसि हि किमर्थं तस्य साधोर्गुणांस्त्वम्,
जनयति मम वेदं कुत्सितं कर्म्म लज्जां,
नृपतिरिह शठानां मादृशां किं नु कुर्य्यात्।

तथाप्यन्यउपायश्चिन्त्यताम्।

---

(१) अत्र त्वमेव पण्डितः।

(२) शर्व्विलक, यदि मम वचनं श्रूयते, तत् तस्यैव महानुभावस्य प्रतिनिर्य्यातय।

(३) न चन्द्रादातपोभवति।

(४) साधु मदनिके साधु।

मद। सोअअं अवरो उवाओ (१)।

वसं। को क्खु अवरो उवाओ ऊविस्सदि (२)।

मद। तस्स ज्जेव्व अज्जस्स केरको भविअ, एदं अलङ्कारअं अज्जआए उवणेहि (३)।

शर्वि। एवं कृते किं भवति।

मद। तुमं दाव अचोरो, सोवि अज्जो अरिणो अज्जआए सकं अलङ्कारअं उवगदं भोदि (४)।

शर्वि। नन्वतिसाहसमेतत्।

मद। अइ उवणेहि अस्सधा अदिसाहसं (५)।

वसं। साऊ, मदणिए, साऊ। अभुजिस्साए विअ मन्तिदं (६)।

शर्वि। मयाप्ता महती बुद्धिर्भवतीमनुगच्छता,
निशायां नष्टचन्द्रायां दुर्लभोनाम दर्शकः।

---

(१) सोयमपर उपायः।

(२) कः खलु अपर उपायोभविष्यति।

(३) तस्यैव आर्य्यस्य कृतः भूत्वा इममलङ्कारं आर्य्यायै उपनय।

(४) त्वं तावत् अचोरः, सोऽपि आर्य्यः अनृणः, आर्य्यया स्वकः अलङ्कारः उपगतः भवति।

(५) अयि उपनय अन्यथा अतिसाहसं।

(६) साधु, मदनिके, साधु, अभुजिष्यया इव मन्त्रितं।

मद। तेण तुमं इमस्सिं कामदेवगेहे मुहुत्तअं चिट्ठ, जाव अज्जआए तुहागमणं णिवेदेमि (१)।

शर्वि। एवं भवतु।

मद ॥ उपसृत्य ॥ अज्जए एसो क्खु चारुदत्तस्स सआसादो वह्मणो आअदो (२)।

वसं। हञ्जे, तस्स केरअं त्ति कधं तुमं जाणासि (३)।

मद। अज्जए अत्तकेरअं वि ण जाणामि (४)।

वसं ॥ स्वगतं सशिरःकम्पं विहस्य ॥ जुज्जदि, जुज्जदि ॥ प्रकाशं ॥ पविसदु (५)।

मद। जं अज्जआ आणवेदि ॥ उपगम्य ॥ पविसदु सव्विलओ (६)।

शर्वि ॥ उपसृत्य ॥ स्वस्ति भवत्यै।

---

(१) तेन त्वमस्मिन् कामदेवगेहे मुहूर्त्तं तिष्ठ, यावत् आर्य्यायै तवागमनं निवेदयामि।

(२) आर्य्ये, एष खलु चारुदत्तस्य सकाशात् ब्राह्मण आगतः।

(३) हे चेटि, तस्य कृते इति कथं त्वं जानासि।

(४) आर्य्ये आत्मनः कृते अपि न जानामि।

(५) युज्यते, युज्यते; प्रविशतु।

(६) यदार्य्या आज्ञापयति, प्रविशतु शर्व्विलकः।

वसं। अज्ज वन्दामि, समाविसदु अज्जो (१)।

शर्वि। सार्थवाहस्त्वां विज्ञापयति। जर्जरत्वाद्गृहस्य दुरक्षमिदं भाण्डम्; तद्गृह्यतां ॥इति मदनिकायाः समर्प्य प्रस्थितः॥

वसं। अज्ज, ममावि दाव पडिसंदेसं तहिं अज्जो णेदु (२)।

शर्वि ॥स्वगतम्॥ कस्तत्र यास्यति ॥प्रकाशम्॥ कः प्रतिसन्देशः।

वसं। पडिच्छदु अज्जो मदणिअं (३)।

शर्वि। भवति, न खल्ववगच्छामि।

वसं। अहमवगच्छामि।

शर्वि। कथमिव।

वसं। अहं अज्जचारुदत्तेण भणिदा, जो इमं अलङ्कारअं समप्पइस्सदि, तस्स तुए मदणिआ दादव्वा। ता सो जेव्व एदं दे दिवि एव्वं अज्जेण अवगच्छिदव्वं (४)।

---

(१) आर्य्य वन्दे, समाविशतु आर्य्यः।

(२) आर्य्य ममापि तावत् प्रतिसन्देशं तत्र आर्य्यो नयतु।

(३) प्रतीच्छतु आर्य्यो मदनिकां।

(४) अहमार्य्यचारुदत्तेन भणिता, यः इमं अलङ्कारं समर्पयिष्यति, तस्य त्वया मदनिका दातव्या; तस्मएव एतान्ते ददातीति, एवं आर्य्येण अवगन्तव्यं।

शर्वि ॥ स्वगतम्॥ अये, विज्ञातोऽहमनया ॥ प्रकाशं ॥
साधु, चारुदत्त, साधु।

गुणेष्वेव हि कर्त्तव्यः प्रयत्नः पुरुषैः सदा;
गुणयुक्तो दरिद्रोऽपि नेश्वरैरगुणैः समः।

अपिच।

गुणेषु यत्नः पुरुषेण कार्य्यो, न किञ्चिदप्राप्यतमं गुणानाम्;
गुणप्रकर्षादुडुपेन शम्भोरलङ्घितं लङ्घितमुत्तमाङ्गम्।

वसं। को एत्थ पवहणिओ (१)।

॥ प्रविश्य सप्रवहणश्चेटः॥ अज्जए, सज्जम्पवहणं (२)।

वसं। हञ्जे, मअणिए, सुदिट्ठं मं करेहि, दिण्णसि, आरुह पवहणं, सुमरेसि मं (३)।

मद ॥रुदती॥ परिचअह्मि अज्जआए (४) ॥ इति पादयोः पतति॥

---

(१) कोऽत्र प्रवहणिकः।

(२) आर्य्ये सज्जं प्रवहणं।

(३) चेटि मदनिके, सुदृष्टां मां कुरु, दत्तासि, आरोह प्रवहणं, स्मरसि मां।

(४) परिच्युतास्मि आर्य्यायाः।

वसं। संपदं तुमं जेव्व वंदणीआ संवुत्ता, ता गछ, आरुह पवहणं। सुमरेसि मं (१)।

शर्वि। स्वस्ति भवत्यै; मदनिके,

सुदृष्टः क्रियतामेष शिरसा वन्द्यतां जनः,

यत्र ते दुर्लभं प्राप्तं वधूशब्दावगुण्ठनं। २०

॥ इति मदनिकया सह प्रवहणमारुह्य गन्तुं प्रवृत्तः। नेपथ्ये ॥ कः कोऽत्र भोः राष्ट्रियः समाज्ञापयति। एष खल्वार्य्यको गोपालदारकोराजा भविष्यतीति, सिद्धादेशप्रत्ययपरित्रस्तेन पालकेन राज्ञा, घोषादानीय घोरे बन्धनागारे चिप्तः। ततः स्वेषु स्वेषु स्थानेषु अप्रमत्तमत्तैर्भवद्भिर्भवितव्यम्।

शर्वि ॥ आकर्ण्य॥ कथं? राज्ञा पालकेन प्रियसुहृदार्य्यकोमे बद्धः। कलत्रवांश्चास्मि संवृत्तः। कष्टम्। अथवा।

द्वयमिदमतीव लोके प्रियं नराणां, सुहृच्च, वनिता च;

संप्रति तु सुन्दरीणां शतादपि सुहृद्विशिष्टतमः।

भवत्ववतरामि ॥ इत्यवतरति ॥

मद ॥ सास्रं अंजलिं बध्वा॥ एव्वं णेदं; ता परं णेदु मं अज्जउत्तो समीवं गुरुअणानं (२)।

---

(१) साम्प्रतं त्वमेव वन्दनीया सम्वृत्ता, तद्गच्छ, आरोह प्रवहणं, स्मरसि मां।

(२) एवं नेदं; तत्परं नयतु मां आर्य्यपुत्रः समीपं गुरुजनानां।

शर्वि। साधु, प्रिये, साधु; अस्मच्चित्तसदृशमभिहितम्। ॥चेटमुद्दिश्य॥ भद्र, जानीषे रेभिलस्य सार्थवाहस्य उदवसितं।

चेटः। अधइं (१)।

शर्वि। तत्र प्रापय प्रियां।

चेटः। जं अज्जो आणवेदि (२)।

मद। जधा अज्जउत्तो भणादि। अप्पमत्तेण दाव अज्जउत्तेण होदव्वं (३) ॥ इति निष्क्रान्ता॥

शर्वि। अहमिदानीं।

ज्ञातीन्, विटान्, स्वभुजविक्रमलब्धशब्दान्,
राजापमानकुपितांश्च नरेन्द्रभृत्यान्,
उत्तेजयामि, सुहृदः परिमोक्षणाय,
यौगन्धरायणइवोदयनस्य राज्ञः।

अपिच।

प्रियसुहृदमकारणे गृहीतं
रिपुभिरसाधुभिराहितात्मशङ्कैः,
सरभसमभिपत्य मोचयामि,
स्थितमिव राहुमुखे शशाङ्कबिम्बम् ॥ इति निष्क्रान्तः॥

---

(१) अथ किं।

(२) यदार्य्य आज्ञापयति।

(३) यथा आर्य्यपुत्रोभणति; अप्रमत्तेन तावत् आर्य्य पुत्रेण भवितव्यं।

प्रविश्य चेटी। अज्जए, दिट्ठिआ वड्ढसि; अज्जचारुदत्तस्स सआसादोवह्मणोआअदो (१)।

वसं। अहो रमणीअदा अज्जदिवसस्स। ता हञ्जे, सादरं, बन्धुलेण समं, पवेसेहि णं (२)।

चेटी। जं अज्जआ आणवेदि (३) ॥ इति निष्क्रान्ता विदूषकोबन्धुलेन सह प्रविष्टः ॥

विदू। ही, ही भोः; तवच्चरणकिलेसविणिज्जिदेण रक्खस राआ रावणो पुप्फकेण विमाणेण गच्छदि; अहं उण वह्मणो अकिदतवच्चरणकिलेसोवि णअरणारीजणेण गच्छामि (४)।

चेटी। पेक्खदु अज्जो अह्मकेरके गेहदुआरं (५)।

(१) आर्य्ये, दिष्ट्या वर्द्धसे; आर्य्यचारुदत्तस्य सकाशात् ब्राह्मणआगतः।

(२) अहो रमणीयता अद्य दिवसस्य; तच्चेटि, सादरं, बन्धुलेन समं, प्रवेशय एनं।

(३) यदार्य्या आज्ञापयति।

(४) आश्चर्य्यं, भो! तपश्चरणक्लेशविनिर्जितेन राक्षस राजोरावणः पुष्पकेण विमानेन गच्छति, अहं पुनर्ब्राह्मणः अकृततपश्चरणक्लेशोऽपि नगरनारीजनेन गच्छामि।

(५) प्रेक्षतां आर्य्यः अस्माकं कृतं गेहद्वारं।

विदू ॥ अवलोक्य, सविस्मयम् ॥ अहो! सलिलसित्तमज्जिदकिदहरिदोवलेवणस्स, विविहसुअंधकुसुमोवहारचित्तलिदभूमिआभाअस्स, गअणतलालोअणकोदूहलदूरुणामिदसीसस्स, दोलायमाणावलंबिदेरावणहत्थब्भमाइदमल्लिआदामगुणालंकिदस्स, समुद्धदंतिदंततोरणावभासिदस्स, महारअणोवरागसोहिणा पवणबलंदोलणालललंतचञ्चलग्गहत्थेण, इदो एहित्ति वाहरंतेण, विअ, मं सोहग्गपडाआणिवहेण वसोहिदस्स, तोरणधरणक्खंभवेदिआणिक्खित्तसमुल्लसन्तहरिदचूदपल्लवललामफलिहमंगलकलसाभिरामोहअवासस्स, महासुरवक्खत्थलदुब्भेज्जवज्जणिरंतरपडिबद्धकणअकवाडस्स, दुग्गअजणमणोरहाआसअरस्स, वसंतसेणाभवणदुआरस्स, सस्सिरीअदा। जं सच्चं मज्झत्थस्स वि जणस्स बलाहिट्ठिं आआरेदि (१)।

---

(१) अहो; सलिलसिक्तमार्जितकृतहरितोपलेपनस्य, विविधसुगन्धकुसुमोपहारचित्रितभूमिकाभागस्य, गगणतलालोकनकौतूहलदूरोन्नमितशीर्षस्य, दोलायमानावलम्बितैरावणहस्तभ्रमायितमल्लिकादामगुणालङ्कृतस्य, समुच्छ्रितदन्तिदन्ततोरणावभासितस्य, महारजनोपरागोपशोभिना पवनबलान्दोलनाललच्चञ्चलाग्रहस्तेन, इत एहीति व्याहरता, इव, मां सौभाग्यपताकानिवहेनोपशोभितस्य तोरणधरणस्तम्भवेदिकानिःक्षिप्तसमुल्लसदङ्कुरितचूतपल्लवललामस्फ

चेटी। एदु, एदु, इमं पढमं पश्रोट्ठं पविसदु अज्जो (१)।

विदू ॥ प्रविश्यावलोक्य च॥ ही, ही, भोः! इधवि पढमे पश्रोट्ठे, ससिसंखमुणालसछ्हाश्रो, विणिहिदचुस्समुट्ठिपण्डुराश्रोविविहरअणपडिबद्धकञ्चणसोवाणसोहिदाश्रो, पासादपंत्तिश्रो, श्रोलविंदमुत्तादामेहिं फलिहवादाअणमुहश्रंदेहिं णिज्झाश्रंतीविश्र उज्जइणिं। सोत्तिश्रो विश्र सुहोवविट्ठो णिद्दाअदि दोवारिश्रो। सदहिणा फलमोदणेण पलोहिदाण भक्खंदि वाश्रसावलिं सुधासवण्णदाए। श्रादेसेदु भोदी (२)।

टिकमङ्गलकलसाभिरामोभयपार्श्वस्य,महासुरवचःस्खलदुर्भेद्यवज्रनिरन्तरप्रतिबद्धकनककवाटस्य, दुर्गतजनमनोरथायासकरस्य, वसन्तसेनाभवनद्वारस्य, सश्रीकता। यत्सत्यं मध्यस्थस्यापि जनस्य दृष्टिं श्राकारयति।

(१) एतु, एतु, इमं प्रथमं प्रकोष्ठं प्रविशतु आर्य्यः।

(२) अत्रापि प्रथमप्रकोष्ठे, शशिशङ्खमृणालसच्छाया, विनिहितचूर्णमुष्टिपाण्डुराविविधरत्नप्रतिबद्धकाञ्चनसोपानशोभिताः प्रासादपङ्क्तयः, अवलम्बितमुक्तादामभिः स्फटिकवातायनमुखचन्द्रैर्निध्यायन्तीवोज्जयनीं। श्रोत्रियइव सुखोपविष्टोनिद्राति दौवारिकः। सदध्ना फलमोदकेन प्रलोभितान भक्षयन्ति वायसावलिं सुधासवर्णतया। आदिशतु भवती।

चेटी। एदु, एदु, अज्जो; इमं दुदिअं पओट्ठं पविसदु अज्जो (१)।

विदू॥ प्रविश्यावलोक्य च॥ ही, ही, भोः! इध वि दुदियपओट्ठे, पज्जंतोवणीदजवसबुसकवलसुपुट्ठा तेल्लब्भंगिदविसाणबद्धा, पवहणवइल्ला। अअं अण्णदरो अवमाणिदोविअ कुलिणोदीहं णीससदि सेरिहो। इदो अ अवणीदजुज्झस्स मल्लस्स विअ मद्दीअदि गीवा मेसस्स। इदोइदो अवराणं अस्साणं केसकप्पणा करीअदि। अअं अवरो पाडच्चरो विअ दठबद्धो मंदुराए साहामिअओ॥ अन्यऽतोवलोक्य॥ इदो अ कूरखुअ तेल्लमिस्सं पिंडं हत्थी पडिच्छावीअदि मेत्थपुरुसेहिं। आदेसेदु भोदी (२)।

चेटी। एदु, एदु, अज्जो; इमं तइअं पओट्ठं पविसदु अज्जो (३)।

(१) एतु, एतु, आर्य्य; इमं द्वितीयं प्रकोष्ठं प्रविशत्वार्य्यः।

(२) इहापि द्वितीयस्मिन् प्रकोष्ठे, पर्य्यन्तोपनीतयवस बुसकवलसुपुष्टा घृताभ्यक्तविषाणाबद्धाः, प्रवहणबलीवर्द्दाः। अयमन्यतरोऽवमानितइव कुलीनो दीर्घं निःश्वसिति सैरिभः। इतश्च अपनीतयुद्धस्य मल्लस्येव मर्द्यते ग्रीवा मेषस्य। इतइतो ऽपरेषां अश्वानां केशकल्पना क्रियते। अयमपरः पाटच्चर इव दृढबद्धोमन्दुरायां शाखामृगः। इतश्च भक्तच्युतघृत मिश्रं पिण्डं हस्ती प्रतिग्राह्यते हस्तिपकैः। आदिशतु भवती।

(३) एतु, एतु, आर्य्यः; इमं तृतीयं प्रकोष्ठं प्रविशत्वार्य्यः।

विदू ॥प्रविश्य दृष्ट्वा च॥ ही,ही,भोः! इधवि तईए पओट्ठे इमाइं दाव कुलउत्तजणोववेसणणिमित्तं विरइदाइं आस णाइं। अद्धवाचिदो पासअपीठे चिट्ठइ पोत्थओ। एद अ मणिमअसारिआसहिदं पासअपीठं। इमे अ अवरे मअण संधिविग्गहचदुरा विविह वण्णिआविलित्तचित्तफलअअग्ग हत्थाइदोतदो परिभ्भमंति गणिआवुड्ढविडा। आदेसेदु भोदी (१)।

चेटी। एदु, एदु, अज्जो; इमं चउट्ठं पओट्ठं पविसदु अज्जो (२)।

विदू ॥ प्रविश्यावलोक्य च॥ ही, ही, भोः! इधवि चउट्ठे पओट्ठे जुवदिकरताडिदा जलधरा विअ गंभीरं णदंति मुरआ, खीणपुण्णाओविअ गअणादो तारआओ णिवडंति कंसतालआ, मऊअरविरुअमऊरं वज्जदि वंसो। इअं अवरा ईसापणअ

---

(१) इहापि तृतीयप्रकोष्ठे, इमानि तावत्कुलपुत्र जनोपवेशननिमित्तं विरचितानि आसनानि। अर्द्धवाचितं मञ्चे तिष्ठति पुस्तकं। एतच्च मणिमयसारिकासहितपाशक पीठं। इमे चापरे सन्धिविग्रहचतुराविविधवर्णिकाविलिप्त चित्रफलकाग्रहस्ताइतस्ततः परिभ्रमन्ति गणिका वृद्धविटाः। आदिशतु भवती।

(२) एतु, एतु, आर्य्यः; इमं चतुर्थं प्रकोष्ठं प्रविशत्वि त्यार्य्यः।

कुविदकामिणीविश्र अंकारोविदा कररुहपरिमासेण सारिज्जदि वीणा। इमाओ अंवराओ कुसुमरसमत्ताओ विश्र मअुअरीओ अदिमअुरअरं पगीदाओ गणिआदारिआओ णच्चीअदि, णट्टअं पठीअदि, ससिंगारओ ओवाग्गदा। गवक्खेसु वादं गेह्णति सलिलगग्गरीओ। आदेसेदु भोदी (१)।

चेटी। एदु, एदु, अज्जो; इमं पंचमं पओट्ठं पविसदु अज्जो (२)।

विदू ॥ प्रविश्य दृष्ट्वा च॥ ही, ही, भो:! इधवि पंचमे पओट्ठे अअं दलिद्दजणलोअुप्पादणकरो आहरइ उवचिदो हिंगुतेल्लगन्धो। विविहसुरहिधूमुग्गरेहिं णिच्चसत्ताविज्जमाणि णीससदि विश्र महानसं दुवारमुहेहिं। अधिअं अुसु

---

(१) आश्चर्य्यं, भो! इहापि चतुर्थे प्रकोष्ठे युवतिकरताडिता जलधरा इव गम्भीरं नदन्ति मृदङ्गा:, क्षीणपुण्या इव गगणात्तारकानिपतन्ति कांश्यताला, मधुकरविरुतमधुरं वाद्यते वंश:। इयमपरा ईर्षाप्रणयकुपितकामिनीव अङ्कारोपिता कररुहपरिमर्षेन सार्य्यते वीणा। इमा अपरा: कुसुमरसमत्ता इव मधुकर्य्योऽतिमधुरतरं प्रगीता गणिकादारिका नृत्यन्ते, नाट्यं पठ्यन्ते, सशृङ्गारा: अपवल्गिता:। गवाक्षेषु वातं गृह्णन्ति सलिलगर्ग्य्य:। आदिशतु भवती।

(२) एतु, एतु, आर्य्य:; इमं पञ्चमं प्रकोष्ठं प्रविशत्वार्य्य:।

सावेदि मं साहिज्जमाणवहुविहभक्खभोअणगंधो। अअं अवरो पडच्चरं विअ पोट्टिं धोअदि रूपिदारिओ। वहुविहा हारविआरं उवसाहेदि सूवआरो। वज्झंति मोदआ, पच्चंति च पूवआ॥ आत्मगतम्॥ अवि दाणिं इह वट्टिअ भुजसुत्ति पादोदअं लहिस्सं॥ अन्यतोऽवलोक्य च॥ इदो गंधव्व सुरग णेहिं विअ विविहालंकारसोहिदेहिं गणिआजणेहिं बंधुलेहिं सच्चं सग्गीअदि एदं गेहं। भो, के तुह्मे बंधुला णाम (१)?

बंधुलाः। वयं खलु,

परगृहललिताः, परान्नपुष्टाः,
परपुरुषैर्जनिताः पराङ्गनासु,
परधननिरता गुणेष्ववाच्या
गजकलभा इव बंधुलाललामः। २१

---

(१) आश्चर्य्यं, भोः! इहापि पञ्चमे प्रकोष्ठे अयं दरिद्रजन लोभोत्पादनकरमाहरति उपचितो हिङ्गुतैलगन्धः। विविध सुरभिधूमोद्गारैर्नित्यसन्ताप्यमानं निःश्वसितीव महानसं द्वार मुखैः। अधिकमुत्सुकायते मां साध्यमानवहुविधभक्ष्यभोजन गन्धः। अयमपरो जीर्णवस्त्रमिव हतपशूदरपेशिं धावति रूपिदारकः। विविधाहारविकारमुपसाधयति सूपकारः। बध्यन्ते मोदकाः, पच्यन्ते च पूपकाः। अपीदानीमिह परि विष्टं भुङ्क्ष्व, इति पादोदकं लप्स्ये। इह गन्धर्व्वाप्सरोगणैरिव विविधालङ्कारशोभितैर्गणिकाजनैर्बन्धुलैश्च यत्सत्यं स्वर्गायते इदं गेहं। भोः, के यूयं बन्धुला नाम?

विदू। आदेसेदु भोदी (१)।

चेटी। एदु, अज्जो; इमं छट्ठं पओट्ठं पविसदु अज्जो (२)।

विदू ॥ प्रविश्यावलोक्य च॥ ही, ही, भोः! इधवि छट्ठे पओट्ठे, अअं दाव सुवस्सरअणाणं कम्म तोरणाइं णीलरअण विणिक्खित्ताइं इंदाउहट्ठाणं विअ दरिसंति; वेरुलिअ, मोत्तिअ, पवालपुस्सराअ इंदणील कक्केतरअपदमराअमर गअ पऊदिआइं रअणविसेसाइं, अस्सोण्णं विआरेंति सिप्पिणो। वज्झंति जादरूवेहिं, माणिक्काइं घडिज्जंति, सुवस्सालंकारा रत्तसुत्तेण गत्थीअंति मोत्तिआभरणाइं, घसीअंति धीरं वेडुरिआइं, छेदीअंति संखआ, साणिज्जंति पवालआ, सुक्ख विअंति अविदकुमपत्थरा। सालीअदि सेरलज्जअं, विस्साणीअदि चंदणरसो, संजोईअंति गंधजुत्तीओ। दीअदि गणिआ कामुकाणं सकप्पूरं तंवोलं, अवलोईअदि सकडक्खअं, पअट्टदि हासो, वीअदि अ अणवरअं ससिक्कारं मइरा। इमे चेडाओ, इमा चेडिआओ, इमे अवरे अवधीरिदपुत्त दारवित्तामणुस्सा आसवकरआ पीदमदिरेहिं गणिआजणेहिं जे मुक्का ते पिअंति। आदेसेदु भोदी (३)।

---

(१) आदिशतु भवती।

(२) एतु, एतु, आर्य्यः; इमं षष्ठं प्रकोष्ठं प्रविशत्वार्य्यः।

(३) आश्चर्य्यं, भो! इहापि षष्ठे प्रकोष्ठे अमूनि तावत्सु वर्णरत्नानां कर्म्म तोरणानि, नीलरत्नविनिक्षिप्तानि, इन्द्रा युधस्थानमिव दर्शयन्ति, वैदूर्य्यमौक्तिकप्रवालकपुष्पराग

चेटी। एदु, एदु, अज्जो; इमं सत्तमं पओट्ठं पविसदु अज्जो (१)।

विदू ॥ प्रविश्यावलोक्य च॥ ही, ही, भो:; इधवि सत्तमे पओट्ठे, सुसिलिट्ठविहंगवाडीसुहणिसण्णाइं, अणोणचुंवणपराइं सुहमणुभवंति पारावदमिहुणाइं, दहिभत्तपूरिदोदरो बंह्मणोविअ सुत्तं पठदि पंजरसुओ। इअं अवरा, सामिसंमाणणालद्धपसराविअ घरदासी अधिअं कुरुकुराअदि मदणसारिआ, अणेअफ्फलरसासादपठुट्ठकंठा कुंभदासी विअ कूअदि

इन्द्रनीलकर्केतरकपद्मरागमरकतप्रभृतीन् रत्नविशेषान् अन्योन्यं विचारयन्ति शिल्पिन:। बध्यन्ते जातरूपैर्माणिक्यानि। घट्यन्ते सुवर्णालङ्कारारक्तसूत्रेण। ग्रथ्यन्ते मौक्तिकाभरणानि। घृष्यन्ते धीरं वैदूर्य्या:। छिद्यन्ते शङ्खा:। शाणघर्षणेन निर्म्मीयन्ते प्रवालका:। शोष्यन्ते आर्द्रकुसुमप्रस्तरा:। सार्य्यते कस्तुरिका। विशेषेण घृष्यते चन्दनरस:। संयोज्यन्ते गन्धयुक्तय:। दीयते गणिका कामुकयो: सकर्पूरं ताम्बूलं। अवलोक्यते सकटाक्षं। प्रवर्त्तते हास:। पीयते चानवरतं ससीत्कारं मदिरा। इमे चेटा, इमाश्चेटिका:, इमे अपरे अवधीरितपुत्रदारवित्तामनुष्या:, आसवकरकापीतमदिरै र्गणिकाजनैर्य्ये मुक्तास्ते पिवन्ति आदिशतु भवती।

(१) एतु, एतु, आर्य्य:; इमं सप्तमं प्रकोष्टं प्रविशत्वार्य्य:।

परउठ्ठा, आलंविदा णागदंतेसु पंजरपरंपराओ, जोधीअंति लाबआ, आलविअंति पंजरकविंजरकवोदाः। इदो विविह मणिविचित्तलिदो विअ अअं सहरिसंणच्चंतो रविकिरणसंतत्तं पक्खक्खेवेहिं विधुवेदि विअ पासादं घरमोरो ॥ अन्यतोऽव लोक्य ॥ इदो पिंण्डीकिदा विअ चंदपादा पदगदिं सिक्खंता, विअ कामिणीणं पत्तादो परिभ्भमंति राअहंसमिहुणा। एदे अवरे वुढमहल्लका विअ इदोतदो संचरंति घरसारसा। ही ही भोः; पसारअं किदं गणिआए णाणापक्खिसमूहेहिं। जं सच्चं खु णंदणवणं विअ मे गणिआघरं पडिभासदि। आदेसेदु भोदी (१)।

(१) इहापि सप्तमे प्रकोष्ठे सुश्लिष्टविहङ्गवाटीसुख निषण्णानि, अन्योन्यचुम्बनपराणि सुखमनुभवन्ति पारावत मिथुनानि। दधिभक्तपूरितोदरब्राह्मणइव सूक्तं पठति पञ्जरशुकः। इयमपरा स्वामिसंमाननालब्धप्रसराइव गृह दासी अधिकं कुरकुरायते मदनसारिका। अनेकफलरसा स्वादप्रतुष्टकण्ठा कुम्भदासीव कूजितपरपुष्टा। आलम्बिता नागदन्तेषु पञ्जरपरम्पराः, योध्यन्ते लावकाः; आला प्यन्ते पञ्जरकपोताः। इतस्ततोविविधमणिविचित्रितइवायं सहचरीसहितः संहर्षेण नृत्यन् रविकिरणसंतप्तं पक्षोत्क्षेपै र्विधुवतिइव प्रासादं गृहमयूरः। इतः पिण्डीकृताइव चन्द्र

चेटी। एदु अज्जो; इमं अट्ठमं पओट्ठं पविसदु अज्जो(१)।

विदू ॥ प्रविश्यावलोक्य च॥ भोदि; को एसो पट्टपावार अपाउदो अधिअदरं अच्चभुदपुणरुत्तालङ्कारालंकिदो अंग भंगेहिं परिक्खलंतोइदोतदो परिब्भमदि (२)।

चेटी। अज्ज, एसो अज्जआए अग्गं भादा भोदि (३)।

विदू। केत्तिअं तवच्चरणं कदुअ वसंतसेणाए भादा भोदि। अधवा। मा दाव; जदिवि एसो उज्जलोसिणिद्धोअ सुअंधोअ तहवि पमसाणवीधीए जादो विअ चंपअरुक्खो, अणहिगमणीओ लोअस्स ॥ अन्यतोऽवलोक्य॥ भोदि, एषा उण का फुल्लपावारअपाउदा, उवाणहजुअलणिक्खित्ततेल्ल चिक्कणेहिं पादेहिं, उच्चासणे उवविट्ठा चिट्ठदि (४)।

पादाः पदगतिं शिचन्तीव कामिनीनां। पश्चात्परिभ्रमन्ति राजहंसमिथुनानि। एते अपरे वृद्धश्रेष्ठाइव इतस्ततः संचरन्ति गृहसारसाः। आश्चर्य्यं भोः! प्रसारणं कृतं गणिकायानानापक्षिसमूहैः। यत्सत्यं खलु नन्दनवनमिव मे गणिकागृहं प्रतिभासते आदिशतु भवती।

(१) एत्वार्य्यः, इममष्टमं प्रकोष्ठं प्रविशत्वार्य्यः।

(२) हे कएष पट्टप्रावारकप्रावृतोऽधिकतरं अत्यद्भुत पुनरुक्तालङ्कारालङ्कृतः अङ्गभङ्गैः परिस्खलन् इतस्ततः परिभ्रमति।

(३) आर्य्य, एष आर्य्यायाः अयं भ्राता भवति।

(४)कियत्तपश्चरणं कृत्वा वसन्तसेनायाभ्राता भवति।

चेटी। अज्ज, एसा खु अह्माणं अज्जआए अत्तिआ (१)।

विदू। अहो, से कडुइहाइणीए पोट्टवित्थारो; ता किं, एदं पवेसिअ महादेवं विअ दुआरसोहा इऊ घरे णिम्मिदा (२)।

चेटी। हदास मा एवं उवहस अह्माणं अत्तिअं। एसा खु चाउत्थिएण पोडीअदि (३)।

विदू ॥सपरिहासं॥ भअवं चाउत्थिअ एदिणा उवआरेण मंपि बह्मणं आलोएहि (४)।

चेटी। हदास, मरिस्ससि (५)।

अथवा मा तावत्; यद्यपि एषउज्ज्वलः स्निग्धश्च सुगन्धश्च तथापि श्मशानवीथ्यां जातइव चम्पकवृचः अनभिगमनीयो लोकस्य। भो, एषा पनः का, पुष्पप्रावारकप्रावृता उपानद्युगलनिचिप्ततैलचिक्कणैः पादैः उच्चासनोपविष्टा तिष्ठति।

(१) आर्य्य, एषा खल्वस्माकं आर्य्यायामाता।

(२) अहो अस्याअपवित्रडाकिन्याउदरविस्तारः तत्किमेतां प्रविश्य महादेवमिव द्वारशोभा इह गृहे निर्म्मिता।

(३) हताश; मैवमुपहसास्माकं मातरं। एषा खलु चातुर्थिकेन पीड्यते।

(४) भगवन्, चातुर्थिक एतेनोपचारेण मामपि ब्राह्मणं आलोकय।

(५) हताश, मरिष्यसि।

विदू ॥सपरिहासं॥ दासीए धीए, वरं दूदिसोद्धूणपीण जठरोमुदोजेव्व, सोऊसुरासवमत्तिआ एआवत्थं गदा हि गत्तिआ जइ मरदि, एत्थ अत्तिआ भोदि सिआलसहस्सज त्तिआ। भोदि किं तुह्माणं जानवत्ता वहन्ति (१)।

चेटी। अज्ज; णहि, णहि (२)।

विदू। किं वा एत्थ पुच्छीअदि, तुह्माणं खु पेम्मणिम्मलजले, मअणसमुद्दे, त्थणणीअं वजहणाएव जाणवत्तामणहरणा। एवं वसंतसेणाए वऊबुत्तंतं, अट्ठपओट्ठभवणं पेक्खिअ, जं सच्चं जाणामि, एकत्थं विअ तविट्ठअं दिट्ठं, पसंसिदूं णत्थि मे वाआ विहवो। किं दाव, गणिआघरो, आदु कुवेरभवणपरिच्छे दोत्ति। कहिं तुह्माणं अज्जआ (३)।

---

(१) दास्याः पुत्रि; वरं ईदृशः स्थूनपीनजठरोमृतएव सीधुसुरासवमत्ता एतादृशीमवस्थां गता हि अतिवृद्धा यदि म्रियते, अत्र माता भवति शृगालसहस्रयात्रा। हे भवति किं युष्माकं यानपात्राणि वहन्ति।

(२) आर्य्य; नहि, नहि।

(३) किं वा अत्र पृच्छ्यते युष्माकं खलु प्रेमनिर्म्मलजले मदनसमुद्रे स्तननितम्बजघनान्येव यानपात्राणि मनोहराणि। एवं वसन्तसेनायावऊवृत्तान्तं, अष्टप्रकोष्ठं भवनं प्रेक्ष्य, यत्सत्यं जानामि एकस्मिमिव त्रिपिष्टपं दृष्टं प्रशंसितुं नास्ति मे वाचा विभवः। किं तावत् गणिकागृहं, अथवा कुवेरभवनपरिच्छेद इति। कुत्र युष्माकमार्य्या।

चेटी। अज्ज, एषा रुक्खवाडिआए चिट्ठदि, ता पविसदु अज्जो (१)

विदू ॥प्रविश्य दृष्ट्वा च॥ ही, ही, भोः! अहो रुक्खवाडिआए सस्सिरिअदा, अक्करीअकुसुमा जत्थ रोविदाणेअवादवा णिरंतरपादवतलणिम्मिदा, जुवतिजणजहणपमाणा, पट्टदोला, सुवणजूहिआ सेहालिआ मालई मल्लिआ णोमालिआ कुरवआअदिमोत्तअप्पऊदिकुसुमेहिं, सअं णिवडिदेहिं, जं सच्चं लऊ करेदि विअ णंदणवणस्स सस्सिरीअदं। ॥अन्यतोऽवलोक्य॥ इदो अ उदअंतसूरसमप्पहेहिं, कमलरत्तोप्पलेहिं संझाअदि विअ दिहिआ। अविअ एसो असोअवुक्खो णवणिग्गअकुसुमपल्लवो भादि, सुहडोव्व समरमज्झे घणलोहिदपंकचच्चिक्को। भोदु; ता कहिं तुह्माणं अज्जआ(२)।

(१) आर्य्ये, एषा वृक्षवाटिकायां तिष्ठति; तस्मात् प्रविशत्वार्य्यः।

(२) आश्चर्य्यं, भो! अहोवृक्षवाटिकायाः सश्रीकता अक्करीतिकुसुमायत्र रोपिताअनेकपादपाः निरन्तरपादपतलनिर्म्मिता, युवतिजनजघनप्रमाणा, पट्टदोला सुवर्णयूथिका शेफालिका मालती मल्लिका नवमल्लिका कुरुवकातिमुक्तकप्रभृतिकुसुमैः, स्वयं निपतितैर्यत्सत्यं लघूकरोतीव नन्दनवनस्य सश्रीकतां। इतश्च, उदयत्सूर्य्यसमप्रभैःकमलरक्तो

चेटी। अज्ज, ओणमेहि दिट्ठिअं, पेक्ख अज्जअं (१)।

विदू ॥ दृष्ट्वा उपसृत्य॥ सोत्थि भोदीए (२)।

वसं। अये मैत्रेय ॥ उत्थाय॥ स्वागतमिदमासनमत्रो पविश्यताम्।

विदू। उववसदु भोदी (३) ॥ उभावुपविशतः॥

वसं। अयि, कुशलं सार्थवाहपुत्रस्य।

विदू। भोदि कुसलं (४)।

वसं। आर्य्य मैत्रेय, अपीदानीम्।

गुणप्रवालं विनयप्रशाखं विस्रंभमूलं महनीयपुष्पं,
तं साधु वृक्षं स्वगुणैः फलाढ्यं, सुहृद्विहङ्गाः सुखमाश्रयन्ति।

विदू ॥ स्वगतं॥ उवलक्खिदं दुट्ठविलासिणीए ॥ प्रकाशं॥ अधइं (५)।

वसं। अये, किमागमनप्रयोजनं।

त्पलैः संध्यायते इव दीर्घिका। अपिच। एष अनेकवृन्तोनव निर्गतकुसुमपल्लवोभाति, सुभट इव समरमध्ये घनलोहित पङ्कचर्चिकः। तत्कुत्र युष्माकमार्य्या।

(१) आर्य्य, अवनमय दृष्टिं, पश्यार्य्यां।

(२) स्वस्ति भवत्यै।

(३) उपविशतु भवती।

(४) हे कुशलं।

(५) उपलक्षितं दुष्टविलासिन्या। अथकिं।

विदू। सुणादु भोदी। तत्तभवं चारुदत्तो सीसे अंजलिं कदुअ भोदिं विसवेदि (१)।

वसं ॥ अंजलिं बद्धा ॥ किमाज्ञापयति।

विदू। मए तं सुवसभंडअं विसंभादो अत्त ण के रकेत्ति कदुअ, जूदे हारिदं, सो अ सहिओ राआवत्थआरी ण आणी, अदि कहिं गदो त्ति (२)।

चेटी। अज्जए, दिट्ठिआ वढ्ढसि; अज्जो जूदिअरो संवुत्तो (३)।

वसं ॥ खगतं ॥ कधं, चोरेण अवहदं सोंडीरदाए जूदे हारिदोत्ति भणादि; अदो जेव्व कामीअदि (४))।

विदू। ता, तस्स कारणादो गेह्णदु भोदी इमं रअणावलिं (५)।

---

(१) शृणोतु भवती। तत्रभवान् चारुदत्तः शीर्षे अञ्जलिं कृत्वा आर्य्यां विज्ञापयति।

(२) मया तत्सुवर्णभाण्डं विस्रम्भादात्मनः कृते, इति कृत्वा, द्यूते हारितं, सच सभिको राजावश्यकारी, न ज्ञायते कुत्र गतइति।

(३) आर्य्ये, दिष्ट्या वर्द्धसे; आर्य्योद्यूतकरः संवृत्तः।

(४) कथं, चौरेणापहृतं शौण्डीरतया द्यूते हारितं इति भणति; अतएव काम्यते।

(५) तत्तस्य कारणात् गृह्णातु भवती इमां रत्नावलीं।

वसं ॥ आत्मगतं ॥ किं दंसेमि तं अलंकारअं ॥ विचिन्त्य ॥ अधवा ण दाव (१)।

विदू। किं दाव ण गेह्लदि भोदी एदं रअणावलिं (२)।

वसं ॥ विहस्य सखीमुखं पश्यन्ती ॥ मित्तेअ, कधं ण गेह्लिस्सं रअणावलिं ॥ इति गृहीत्वा पार्श्वे स्थापयति; स्वगतं ॥ कधं झीणकुसुमादो वि सहआरपादवादो मअरंदविंदओ णिवडंति ॥ प्रकाशं ॥ अज्ज, विस्सवेसि तं जूदिअरं मम वअणेण अज्जचारुदत्तं; अहं वि पदोसे अज्जं पेक्खिदुं आगमिस्सामित्ति (३)।

विदू ॥ स्वगतं ॥ किं, अण्णं तहिं गदुअ गेह्लिस्सदि ॥ प्रकाशं ॥ भोदि, भणामि ॥ स्वगतं ॥ णीअत्तीअदु इमादो गणिआपसंगादोत्ति (४) ॥ इति निष्क्रान्तः ॥

---

(१) किं, दर्शयामि तमलङ्कारं। अथवा न तावत्।

(२) किं तावत् न गृह्णाति भवती इमां रत्नावलीं।

(३) मैत्रेय, कथं न ग्रहीष्यामि रत्नावलीं। कथं, हीनकुसुमादपि सहकारपादपान्मकरन्दविन्दवोनिपतन्ति। आर्य्य, विज्ञापयसि तं द्यूतकरं मम वचनेनार्य्यचारुदत्तं। अहमपि प्रदोषे आर्य्यं प्रेक्षितुं आगमिष्यामि।

(४) किमन्यत्तत्र गत्वा ग्रहीष्यति। हे भवति, भणामि। निवर्त्ततामस्मात् गणिकाप्रसङ्गादिति।

वसं। हंजे, गेह्न एदं अलंकारअं; चारुदत्तं अहिरमिदुं गच्छम्ह (१)।

चेटी। अज्जए, पेक्ख, पेक्ख; उन्नमदि अकालदुद्दिणं (२)।

वसं। उदयंतु नाम मेघा, भवतु निशा, वर्षमविरतं पततु,

गणयामि नैव सर्व्वं, दयिताभिमुखेन हृदयेन।

हंजे हारं गेह्निअ लहुं आअच्छ (३)॥ इति निष्क्रान्ताः सर्व्वे

मदनिकाशर्विलकश्चतुर्थोऽङ्कः

(१) चेटि, गृहाणैतं अलङ्कारं, चारुदत्तमभिरन्तुं गच्छामः।

(२) आर्य्ये, पश्य, पश्य; उन्नमत्यकालदुर्द्दिनमिति।

(३) चेटि, हारं गृहीत्वा शीघ्रमागच्छ।

# अथ पञ्चमोऽङ्कः।

---

ततः प्रविशति आसनस्थः सोत्कण्ठश्चारुदत्तः।

चारु ॥ ऊर्द्ध्वमवलोक्य॥ उन्नमत्यकालदुर्द्दिनम्। यदेतत्।

आलोकितं गृहशिखण्डिभिरुत्कलापै,
हंसैर्यियासुभिरपाकृतमुन्मनस्कैः,
आकालिकं सपदि दुर्द्दिनमन्तरीक्ष
मुत्कण्ठितस्य हृदयं च समं रुणद्धि।

अपिच। मेघोजलार्द्रमहिषोदरभृङ्गनीलो,
विद्युत्प्रभारचितपीतपटोत्तरीयः,
आभाति संहतवलाकगृहीतशंखः,
खङ्गेशवोऽपरइवाक्रमितुं प्रवृत्तः।

अपिच।
केशवगात्रश्यामः, कुटिलबलाकावलीरचितशङ्खः,
विद्युद्गुणकौशेयश्चक्रधरइवोन्नतोमेघः।
एतानिषिक्तरजतद्रवसंनिकाशा
धारा जवेन पतिताजलदोदरेभ्यः,
विद्युत्प्रदीपशिखया क्षणनष्टदृष्टा
श्छिन्नाइवाम्बरपटस्य दशाः पतन्ति।

संसक्तैरिव चक्रवाकमिथुनैर्हंसैः प्रडीनैरिव,
व्याविद्धैरिव मीनचक्रमकरैर्हर्म्यैरिव प्रोच्छ्रितैः,
तैस्तैराकृतिविस्तरैरनुगतैर्मेघैः समभ्युन्नतैः,
पत्रच्छेद्यमिवेह भाति गगणं, विश्लेषितैर्वायुना। ।८।
एतत्तद्धृतराष्ट्रचक्रसदृशं मेघान्धकारं नभो
दृष्टो गर्जति, चातिदर्पितबलो दुर्य्योधनो वा शिखी;
अक्षद्यूतजितो युधिष्ठिर इवारण्यं गतः कोकिलो,
हंसाः, संप्रति पाण्डवा इव, वनादज्ञातचर्य्यं गताः। ।९।

॥ विचिंत्य॥ चिरः खलु कालो मैत्रेयस्य वसन्तसेनायाः सकाशं गतस्य नाद्याप्यागच्छति।

॥ प्रविश्य विदूषकः॥ अहो गणिआए लोभो अ, दक्खिण दा अ, जदो न कधा कदा अण्णा, अणाअरेण जेव्व अभणिअ, किं वि एअमेअ गहिदा रअणावली। एत्तिआए रुद्धीए ण तए अहं भणिदो, अज्ज मित्तेअ वीसमीअदु मल्लकेण, पाणीअं पिविअ गच्छीअदु त्ति। ता मा दाव दासीए धीआए गणिआए। सुट्ठु खु वुच्चदि; अकंदसमुत्थिदा पदुमिणी, अवंचओ वाणिओ, अचोरो सुवण्णआरो, अकलहो गामसमागमो, अलुद्धा गणिअत्ति, दुक्करं एदे संभावीअंति। ता पिअवअस्सं गदुअ, इमादो गणिआपसंगादो णिवत्तावेमि ॥ परिक्रम्य दृष्ट्वा॥ कधं, पिअवअस्सो रुक्खवाडिआए उववित्थो चिट्ठदि; ता जाव, उवसप्पामि॥ उपसृत्य॥ सोत्थि भोदे, वड्ढदु भवं (१)।

(१) अहो गणिकाया लोभः अनुदारता च; यतो न कथा

चारु ॥विलोक्य॥ अये सुहृन्मे मैत्रेयः प्राप्तः। वयस्य स्वागतमास्यताम्।

विदू। उवविट्ठह्मि (१)।

चारु। वयस्य, कथयत कार्य्यं।

विदू। तं खु कज्जं विणट्ठं (२)।

चारु। किं तया न गृहीता रत्नावली।

विदू। कुदो अह्माणं एत्तिअं भाअधेअं; णवणलिणकोमलं अंजलिं मत्थए कदुअ पडिच्छिआ (३)।

चारु। तत्किं ब्रवीषि नष्टमिति।

कृता अन्या अनादरेणैव अभणित्वा किमपि एवमेव गृहीता रत्नावली। एतावत्या ऋद्ध्या; न तया अहम्भणितः आर्य्य मैत्रेय, विश्राम्यतु मल्लकेन, पानीयं पीत्वा गम्यतामिति, तत् मा तावत् दास्याः पुत्र्या गणिकायाः। सुष्ठु खलु उचिता, अकन्द समुत्थिता पद्मिनी, अवञ्चको वणिक्, अचौरः सुवर्णकारः, अकलहो ग्रामसमागमः, अलुब्धा गणिकेति दुष्करं एते सम्भाव्यन्ते। तत् प्रियवयस्यं गत्वा, अस्मात् गणिकाप्रसङ्गात् निवर्त्तयामि। अयं प्रियवयस्यो वृक्षवाटिकायामुपविष्ट स्तिष्ठति, तत् यावदुपसर्पामि ; स्वस्ति भवते, वर्द्धतां भवान्।

(१) उपविष्टोऽस्मि।

(२) तत्खलु कार्य्यं विनष्टं।

(३) कुतोऽस्माकमेतावद्भागधेयं, यत् नवनलिनकोमलं अञ्जलिं मस्तके कृत्वा प्रतिगृहीता।

विदू। भो, कधं ण विणट्ठं, जं अभुत्तपीदस्स, चोरेहिं अवहृदस्स, अप्पमुल्लस्स सुवण्णभंडअस्स कारणादो, चदुस्समुद्दसारभूदा रअणमाला हारिदा (१)।

चारु। वयस्य मा मैवं।

यं समालम्ब्य विश्वासं न्यासोऽस्मासु तया कृतः,
तस्यैतन्महतो मूल्यं प्रत्ययस्यैव दीयते। ।२।

विदू। भो, वअस्स; एदं पि मे दुदिअं संतावकारणं; जं सहीअणदिण्णसण्णाए पडंतावबारिदं मुहं कदुअ, अहं उवहसिदो। ता अहं बम्हणो भविअ दाणिं भवन्तं सीसेण पडिअ विण्णवेमि। णिवत्तीअदु अप्पा इमादो बहुपच्चवाआ गणिआ पसंगादो। गणिआ णाम पादुअंत्तरप्पविट्ठा विअ लेट्ठुआ दुःखेण उण णिराकरीअदि। अविअ, भो वअस्स, गणिआ, हत्थी, काअत्थो, भिक्खु, चाटो, रासहो अ, जहिं एदे णिवसंति तहिं दुट्ठावि ण जाअंति (२)?

(१) भो, कथं न विनष्टं, यत् अभुक्तपीतस्य, चौरैरपहृतस्य, अप्रमूल्यस्य सुवर्णभाण्डस्य कारणात्, चतुःसमुद्रसारभूता रत्नमाला हारिता।

(२) भो, वयस्य; एतदपि मे द्वितीयं सन्तापकारणं; यत् सखीजनदत्तसंज्ञया पटान्तापवारितं मुखं कृत्वा, अहमुप

चारु। वयस्य, अलमिदानीं सर्व्वपरिवादमुक्ता। अवस्थयैवास्मि निवारितः। पश्य।

वेगं करोति तुरगस्त्वरितं प्रयातुं,
प्राणव्ययान्न चरणास्तु तथा वहन्ति;
सर्व्वत्र यान्ति पुरुषस्य चलाः स्वभावाः,
खिन्नास्ततो हृदयमेव पुनर्विशन्ति। ।८।

अपिच ।वयस्य।

यस्यार्थास्तस्य सा कान्ता, धनहार्य्यो ह्यसौ जनः।

॥ स्वगतं ॥ न; गुणहार्य्यो ह्यसौ जनः ॥ प्रकाशम् ॥

वयमर्थैः परित्यक्ता, ननु त्यक्तैव सा मया। ।९।

विदू ॥ अधोऽवलोक्य स्वगतम् ॥ जधा, एसो उड्ढं पेक्खिअ, दीहं णिस्ससदि; तधा तक्केमि मए विणिवारिअंतस्स अधिअदरं वड्ढिदा से उक्कंण्ठा; ता, सुट्ठु खु एवं वुच्चदि, वामो कामोत्ति ॥ प्रकाशं ॥ भो वअस्स, भणिदं च ताए, भणेहि

हसितः। तदहं ब्राह्मणोभूत्वा, इदानीं भवन्तं शीर्षेण पतित्वा, विज्ञापयामि। निवर्त्त्यतामात्मा अस्माद्बहुप्रत्यवायात् गणिकाप्रसङ्गात्। गणिका, नाम, पादुकान्तरप्रविष्टा इव, शर्करा, दुःखेन पुनर्निराक्रियते। अपिच, अहो वयस्य, गणिका, हस्ती, कायस्थो, भिक्षुः, चाटो, रासभश्च, यत्र एते निवसन्ति, तत्र दुष्टा अपि न जायन्ते? अपितु जायन्त एव।

चारुदत्तं, अज्ज पओसे मए एत्थ आगंतव्वं त्ति। ता तक्केमि रअणावलीए अपरितुट्ठा अपरं मग्गिदुं आअमिस्सदि त्ति(१)।

चारु। वयस्य, आगच्छतु, परितुष्टा यास्यति।

चेटः ॥ प्रविश्य ॥ अवेध माणहे।

जधा जधा वस्सदि अभ्भखण्डे, तधा तधा तिम्मदि पुट्ठिचम्मे।
जधा जधा लग्गदि शीदवादे, तधा तधा वेवदि मे हलक्के (२)

॥ प्रहस्य ॥

वंशं वाए सत्तच्छिदं सुसद्दं, वीणं वाए सत्ततन्तिं णदन्तिं;
गीअं गाए गद्दहस्साणुरूवं को मे गाणे तुंबरू णारदे वा।

अणत्तह्मि अज्जआए वसन्तसेणाए, कुंभीलआ गच्छ तुमं,

(१) यथा एष ऊर्द्धं प्रेक्ष्य दीर्घं निःश्वसति; तथा तर्कयामि मया निवार्य्यमाणस्य अधिकतरं वृद्धा अस्योत्कण्ठा; तत् सुष्ठु खल्वेवमुच्यते, कामोवामइति। भो वयस्य, भणितश्च तया, भण चारुदत्तं, अद्य प्रदोषे मया अत्र आगन्तव्यमिति। तत्तर्कयामि रत्नावल्या अपरितुष्टा अपरं याचितुं आगमिष्यतीति।

(२) अवेत मानवाः।

यथा यथा वर्षति अभ्रखण्डं, तथा तथार्द्रीभवति पृष्ठचर्म्म;
यथा यथा लगति शीतवातः, तथा तथा वेपते मे हृदयं।

समागमणं अज्जचारुदत्तस्स णिवेदेहि त्ति; ता जावअज्ज चारुदत्तस्स गेहं गच्छामि ॥ परिक्रम्य प्रविष्टकेन ॥ दृष्ट्वा ॥ एसे चालुदत्ते लुक्खवाडिआए चिट्ठदि। एसेवि से दुट्ठ वडुके; ता जाव उवसप्पेमि। कधं, ढक्किदे दुवाले लुक्खवाडिआए? भोदु, एदस्स दुट्ठवडुकस्स सणं देमि (१) ॥ इति लोष्ट गुटिकाः क्षिपति ॥

विदू। अए, को दाणिं एसो पाआरवेट्ठिदं विअ कइत्थं मं लोट्ठकेहिं ताडेदि (२)।

चारु। आरामप्रासादवेदिकायां क्रीडद्भिः पारावतैः पातितं भवेत्।

---

(१) वंशं वादयामि सप्तछिद्रं सुशब्दं,
वीणां वादयामि सप्ततन्त्रीं नदन्तीं,
गीतं गायामि गर्द्दभस्यानुरूपं,
को मे गाणे तुम्बुरुर्नारदोवा।

आज्ञप्तोऽस्मि आर्य्यया वसन्तसेनया, कुम्भीलक, गच्छ त्वं ममा गमनं आर्य्यचारुदत्तस्य निवेदयेति; तद्यावत् आर्य्यचारुदत्त स्य गेहं गच्छामि। एष, चारुदत्तो वृक्षवाटिकायां तिष्ठति; एषोऽपि सदुष्टवटुकः; तद्यावदुपसर्पामि। कथमाछादितं द्वारं वृक्षवाटिकायाः? भवतु, एतस्य दुष्टवटुकस्य संज्ञां ददामि।

(२) अये कइदानीं एष प्राकारवेष्टितमिव कपित्थं, मां लोष्ट्रकैस्ताडयति।

विदू। दासीए उत्त, दुट्ठपारावअ, चिट्ठ, चिट्ठ; जाव एदिणा दंडअट्ठेण, सुपक्कं विअ चूअफलं, इमादो पासादादो भूमीए पाडइस्सं (१) ॥ इति दण्डकाष्ठमुद्यम्य धावति ॥

चारु ॥ यज्ञोपवीते आकृष्य ॥ वयस्य, उपविश; किमनेन; तिष्ठतु दयितासहितस्तपस्वी पारावतः।

चेटः। कधं, पारावदं पश्शदि, मं ण पेक्खदि। भोदु, अवराए लोट्ठगुडिआए पुणोवि ताडइस्सं (२) ॥ तथा करोति॥

विदू ॥ दिशोऽवलोक्य॥ कधं, कुम्भीलओ! ता जाव उवसप्पामि ॥ उपसृत्य॥ द्वारमुद्घाट्य॥ अरे, कुम्भीलआ, पविस, साअदन्दे (३)

चेटः ॥ प्रविश्य॥ अज्ज, वंदामि (४)।

विदू। अरे कहिं तुमं ईदिसे दुद्दिणे अंधआरे आअदो(५)।

---

(१) दास्याःपुत्र, दुष्टपारावत, तिष्ठ, तिष्ठ; यावदेतेन दण्डकाष्ठेन, सुपक्वमिव चूतफलं, अस्मात् प्रासादात् भूमौ पातयिष्यामि।

(२) कथं, पारावतं पश्यति, मां न प्रेक्षते। भवतु, अपरया लोष्ठगुटिकया पुनरपि ताडयिष्यामि।

(३) कथं, कुम्भीलक! तत् यावदुपसर्पामि; अरे कुम्भीलक, प्रविश, स्वागतन्ते।

(४) आर्य्यं, वन्दे।

(५) अरे, कुत्र त्वं ईदृशे दुर्दिने अन्धकारे आगतः।

चेटः। अले, एशा शा (१)।

विदू। का एसा का (२)।

चेटः। एशा शा (३)।

विदू। किं दाणिं दासीए उत्ता, दुब्भिक्खकाले वुड्ढरंको विअ, उद्धकं सासाअसि एशाशाशेति (४)।

चेटः। अले, तुमं पि दाणिं इंदमहकामुको विअ, सुट्ठु किं काकाअसि, काके त्ति (५)।

विदू। ता कहेहि (६)।

चेटः ॥ स्वगतं ॥ भोदु, एव्वं भणिस्सं ॥ प्रकाशं ॥ अले, पश्नं दे दइस्सं (७)।

विदू। अहं, ते मुंडे गोडं दइस्सं (८)।

(१) अरे, एषा सा।

(२) का एषा का।

(३) एषा सा।

(४) किमिदानीं दास्याः पुत्र, दुर्भिक्षकाले वृद्धरङ्क इव ऊर्द्धकं श्वासायसे एषा सा सेति।

(५) अरे, त्वमपि इदानीं इन्द्रमखकामुक इव सुष्ठु किं काकायसे काकेति।

(६) तत् कथय।

(७) भवतु, एवं भणिष्यामि। अरे, प्रश्नं ते दास्यामि।

(८) अहन्ते मस्तके पादं दास्यामि।

चेटः। अले, जाणाहि दाव तेण हि कस्सिं काले चूआ मौलेन्ति (१)।

विदू। अरे, दासीए उत्ता, गिह्मे (२)।

चेटः ॥ सहासं ॥ अले, णहि णहि (३)।

विदू ॥ स्वगतं ॥ किं दाणिं एत्थ कहिस्सं ॥ विचिन्त्य ॥ भोदु, चारुदत्तं गदुअ पुच्छिस्सं ॥ प्रकाशं ॥ अरे, मुहुत्तअं चिट्ठ ॥ चारुदत्तमुपसृत्य ॥ भो वअस्स, पुच्छिस्सं दाव, कस्सिं काले चूआ मौलेन्ति (४)।

चारु। मूर्ख, वसन्ते।

विदू ॥ चेटमुपगम्य ॥ मुक्ख, वसंते (५)।

चेटः। दुदिअं दे पह्णन्दइस्सं। सुसमिद्धाणं गामाणं को रक्खअं करेदि (६)।

---

(१) अरे, जानीहि तावत् तेन हि कस्मिन्काले चूताः मुकुलवन्तोभवन्ति।

(२) अरे, दास्याः पुत्र, ग्रीष्मे।

(३) अरे, नहि नहि।

(४) किमिदानीमत्र कथयिष्यामि। भवतु, चारुदत्तं गत्वा प्रक्ष्यामि। अरे मुहूर्त्तकं तिष्ठ। भो वयस्य, प्रक्ष्यामि तावत्, कस्मिन् काले चूता उन्मुकुलाभवन्ति।

(५) मूर्ख, वसन्ते।

(६) द्वितीयन्ते प्रश्नं दास्यामि। सुसमृद्धानां ग्रामाणां कोरक्षां करोति।

विदू। अरे, रच्छा (१)।

चेटः ॥ सहासं ॥ अरे, णहि णहि (२)।

विदू। भोदु, संसए पडिदह्मि ॥ विचिन्त्य ॥ भोदु, चारुदत्तं पुणोवि पुच्छिस्सं (३) ॥ पुनर्निवृत्य चारुदत्तं तथैवोदाहरति ॥

चारु। वयस्य, सेना।

विदू ॥ चेटमुपगम्य ॥ अरे, दासीए पुत्ता, सेणा (४)।

चेटः। दुवेवि एक्कस्सिं कदुअ, सिग्घं भणाहि (५)।

विदू। सेनावसन्ते।

चेटः। णं, पडिअत्तिअ, भणाहि (६)।

विदू ॥ कायेन परिवृत्य ॥ सेणावसन्ते (७)।

चेटः। अले, मुक्ख बड्डुका, पदाइं पडिवत्तावेहि (८)। +

(१) अरे, रथ्या।

(२) अरे, नहि नहि।

(३) भवतु, संशये पतितोऽस्मि। भवतु, चारुदत्तं पुनरपि प्रच्छामि।

(४) अरे, दासीपुत्र, सेना।

(५) अरे, द्वे अपि एकस्मिन् कृत्वा शीघ्रं भण।

(६) ननु परिवृत्य भण।

(७) सेनावसन्ते

(८) अरे, मूर्ख वटुक, पदे परिवर्त्तय।

विदू ॥ पादौ परिवृत्य ॥ सेनावसन्ते।

विटः। अले, अक्खरपदाइं परिवत्तावेहि (१)।

विदू ॥ विचिन्त्य ॥ वसन्तसेणा (२)

चेटः। एशा शा आअदा (३)।

विदू। ता जाव चारुदत्तस्स णिवेदेमि ॥ उपसृत्य ॥ भो चारुदत्त, धणिओ दे आअदो (४)।

चारु। कुतोऽस्मत्कुले धनिकः।

विदू। जइ कुले णत्थि, ता दुवारे अत्थि। एसा वसन्त सेणा आअदा (५)।

चारु। वयस्य, किं मां प्रतारयसि।

विदू। जइ मे वअणे ण पत्तिआअसि, ता एदं कुम्भीलअं पुच्छ। अरे दासीए पुत्ता, कुम्भीलअ, उवसप्प (६)।

---

(१) अरे अक्षरपदे परिवर्त्तय।

(२) वसन्तसेना।

(३) एषा सा आगता।

(४) तत् यावत् चारुदत्तस्य निवेदयामि। भो चारुदत्त, धनिकस्ते आगतः।

(५) यदि कुले नास्ति, तत् द्वारे अस्ति। एषा वसन्तसेना आगता।

(६) यदि मे वचने न प्रत्ययसे, तदेनं कुम्भीलकं पृच्छ। अरे दास्याः पुत्र कुम्भीरक उपसर्प।

चेटः ॥ उपसृत्य ॥ अज्ज वंदामि (१)।

चारु। भद्र, स्वागतं; कथय सत्यं, प्राप्ता वसन्तसेना।

चेटः। एसा सा आअदा वसन्तसेणा (२)।

चारु ॥ सहर्षं ॥ भद्र, न कदाचित्प्रियवचनं निष्फलीकृतं मया; तद्गृह्यतां पारितोषिकं ॥ इत्युत्तरीयं प्रयच्छति ॥

चेटः ॥ गृहीत्वा; प्रणम्य सपरितोषं ॥ जाव अज्ज आए णिवेदेमि (३) ॥ इति निष्क्रान्तः ॥

विदू। भो अवि जाणासि, किं निमित्तं ईदिसे दुद्दिणे आअदत्ति (४)।

चारु। वयस्य न सम्यगवधारयामि।

विदू। मए जाणिदं; अप्पमुल्ला रअणावली वज्जमुल्लं सुवण्ण भण्डअं त्ति ण परितुट्ठा अवरं मग्गिदुं आअदा (५)।

चारु ॥ स्वागतं ॥ परितुष्टा यास्यति।

॥ ततः प्रविशति उज्ज्वलाभिसारिकावेशेन वसन्तसेना, सोत्कंठा, छत्रधारिणी विटश्च ॥

---

(१) आर्य्य, वन्दे।

(२) एषा सा आगता वसन्तसेना।

(३) यावदार्य्यायानिवेदयामि।

(४) भो अपि जानासि किं निमित्तं ईदृशे दुर्दिने आगतेति।

(५) मया ज्ञातं अल्पमूल्या रत्नावली वज्रमूल्यं सुवर्ण भाण्डं, इति न परितुष्टा अपरं याचितुमागता।

विटः ॥ वसन्तसेनामुद्दिश्य ॥

अपद्मा श्रीरेषा, प्रहरणमनङ्गस्य ललितं,
कुलस्त्रीणां शोको मदनवरवृक्षस्य कुसुमं;
सलीलं गच्छन्ती, रतिसमयलज्जा प्रणयिनी,
रतिक्षेत्रे रङ्गे प्रियपथिकसार्थैरनुगता।

वसन्तसेने, पश्य, पश्य।

गर्ज्जन्ति शैलशिखरेषु विलम्बिविम्बा
मेघावियुक्तवनिताहृदयानुकाराः;
येषां रवेण सहसोत्पतितैर्मयूरैः
खं वीज्यते मणिमयैरिव तालवृन्तैः।

अपि च।

पङ्कक्लिन्नमुखाः पिवन्ति सलिलं धाराहतादर्दुराः,
कण्ठं मुञ्चति वर्हिणः समदनो; नीपः प्रदीपायते।
संन्यासं कुलदूषणैरिव जनैर्मेघैर्वृतश्चन्द्रमा,
विद्युन्नीचकुलोद्गतेव युवतिर्नैकत्र सन्तिष्ठते।

वसं। भाव, सुट्ठु दे भणिदं (१) ॥ एषा हि ॥

मूढे निरन्तरपयोधरया मयैव
कान्तः सहाभिरमते यदि किन्तवाच;
माङ्गर्जितैरिति मुहुर्विनिवारयन्ती
मार्गं रुणद्धि कुपितेव निशा सपत्नी।

(१) भाव, सुष्ठु ते भणितं।

विटः। भवत्वेवं तावदुपलभ्यतां तावदियं।

वसं। भाव, किमनया स्त्रीस्वभावदुर्व्विदग्धयोपालब्धया।

पश्यतु भावः।

मेघावर्षन्तु गर्ज्जन्तु मुञ्चन्त्वशनिमेव वा,
गणयन्ति न शीतोष्णं रमणाभिमुखाः स्त्रियः। \ ७८)

विटः। वसन्तसेने पश्य। अयमपरः,

पवनचपलवेगः, स्थूलधाराशरौघः,
स्तनितपटहनादः, स्पष्टविद्युत्पताकः;
हरति करसमूहं खे शशांकस्य मेघो,
नृपइव पुरमध्ये मन्दवीर्य्यस्य शत्रोः। \ ४७)

वसं। एव्वं णेदं ता कधं एसो अवरो (१)।

एतैरेव यदा गजेन्द्रमलिनैराध्मातलम्बोदरै
र्गर्जद्भिः सतडिद्बलाकशबलैर्मेघैः सशल्यं मनः;
तत्किं प्रोषितभर्तृबध्यपटहो हाहाहताशो बकः, \ ४९)
प्रावृट्प्रावृडिति ब्रवीति शठधीः, क्षारं क्षते प्रक्षिपन्।

विटः। वसन्तसेने एवमेतत्। इदमपरं पश्य।

बलाकापाण्डुरोष्णीषं, विद्युदुत्क्षिप्तचामरं,
मत्तवारणसारूप्यं, कर्त्तुकाममिवाम्बरं। ५०

(१) एवं नेदं तत्कथं एषोऽपरः।

वसं। भाव, पेक्ख पेक्ख (१)।

एतैरार्द्रतमालपत्रमलिनैरापीतसूर्य्यं नभो,
वल्मीकाः, शरताडिताइव गजाः, सीदन्ति धाराहताः।
विद्युत्काञ्चनदीपिकेव रचिता प्रासादसञ्चारिणी,
ज्योत्स्ना दुर्बलभर्तृकेव वनिता, प्रोत्सार्य्य मेघैर्हृता।

विटः। वसन्तसेने पश्य, पश्य।

एते हि विद्युद्गुणबद्धकक्षा गजाइवान्योन्यमभिद्रवन्तः,
शक्राज्ञया वारिधराः सधारा, गां रूप्यरज्ज्वेव समुद्धरन्ति।

॥ अपिच पश्य ॥

महावाताध्मातैर्महिषकुलनीलैर्जलधरै
श्चलैर्विद्युत्पक्षैर्जलधिभिरिवान्तःप्रचलितैः,
इयं गन्धोद्दामा नवहरितशस्याङ्कुरवती
धरा धारापातैर्मणिमयशरैर्भिद्यतइव।

वसं। भाव, एसो अवरो (२)।

एह्येहीति शिखण्डिनां पटुतरं केकाभिराक्रन्दितः,
प्रोड्डीयेव बलाकया सरभसं सोत्कण्ठमालिङ्गितः,
हंसैरुज्झितपङ्कजैरतितरां सोद्वेगमुद्वीक्षितः,
कुर्वन्नञ्जनमेचकाइव दिशो मेघः समुत्तिष्ठते।

विटः। एवमेतत्। तथाहि, पश्य।

(१) भाव, पश्य, पश्य।

(२) एषोऽपरः।

निष्पन्दीकृतपक्षखण्डनयनं नष्टक्षपावासरं,
विद्युद्भिः क्षणदृष्टसुष्ठुतिमिरं प्रच्छादिताशामुखं;
निश्चेष्टं स्वपितीव सम्प्रति पयोधारागृहान्तर्गतं
स्फीताम्भोधरधामनैकजलदच्छत्रापिधानं जगत्।

वसं। भाव, एव्वं णेदं। ता पेक्ख पेक्ख (१)।

गतानाशं तारा उपकृतमसाधाविव जने,
वियुक्ताः कान्तेन स्त्रिय इव न राजन्ति ककुभः।
प्रकामान्तस्तप्तं त्रिदशपतिशस्त्रस्य शिखिना,
द्रवीभूतं मन्ये पतति जलरूपेण गगनं।

॥ अपि च पश्य॥

उन्नमति नमति वर्षति गर्जति मेघः करोति तिमिरौघं,
प्रथमश्रीरिव पुरुषः करोति रूपाण्यनेकानि॥

विटः। एवमेतत्।

विद्युद्भिर्ज्वलतीव, संविहसतीवोच्चैर्बलाकाशतैः,
माहेन्द्रेण विवल्गतीव धनुषा धाराशतोद्गारिणा।
विस्पष्टाशनिनिस्वनेन रसतीवाघूर्णतीवानिलै
र्नीलैः सान्द्रमिवाहिभिर्जलधरैर्धूपायतीवाम्बरं।

वसं।

जलधर निर्लज्जस्त्वं, यन्मां दयितस्य वेश्म गच्छन्तीं,
स्तनितेन भीषयित्वा धाराहस्तैः परामृशसि

भोः शक्र।

(१) भाव एवं नेदं तत्पश्य पश्य।

किन्ते ह्यहं पूर्व्वरतिप्रसक्ता यत्त्वं नदस्यम्बुद सिंहनादैः,
न युक्तमेतत्प्रियकाङ्क्षितायामार्गं निरोद्धुं मम वर्षपातैः।

अपिच।

यद्वदहल्याहेतोर्म्मृषा वदसि शक्र गौतमोऽस्मीति,
तद्वन्ममापि दुःखं निरवेक्ष्य निवार्य्यतां जलदः।

अपिच।

गर्ज वा, वर्ष वा, शक्र, मुञ्च वा शतशोऽशनिम्,
न शक्याहि स्त्रियोरोद्धुं प्रस्थितादयितं प्रति।
यदि गर्जति वारिधरोगर्जतु, तन्नाम निष्ठुराः पुरुषाः;
अयि विद्युत्प्रमदानां त्वमपि च दुःखं न जानासि।

विटः ॥ भवति, अलमलमुपालम्भेन। उपकारिणी तवेयं॥
ऐरावतोरसि चलेव सुवर्णरज्जुः,
शैलस्य मूर्द्ध्नि निहितेव सिता पताका।
आखण्डलस्य भवनोदरदीपिकेय
माख्याति ते प्रियतमस्य हि सन्निवेशं।

वसं। भाव एव्वं तं जेव्व एदं गेहं (१)।

विटः। सकलकलाभिज्ञाया न किञ्चिदिह तवोपदेष्टव्यमस्ति। तथापि स्नेहः प्रलापयति। अत्र प्रविश्य कोपोऽत्यन्तं न कर्त्तव्यः।

यदि कुप्यसि नास्ति रतिः, कोपेन विनाथवा कुतः कामः।
कुप्य च कोपय च, त्वं प्रसीद च त्वं प्रसादय कान्तं।

---

(१) भाव एवं तदेव एतद्गेहं।

भवत्वेवं तावत्। भोभोनिवेद्यतामार्य्यचारुदत्ताय।

एषा फुल्लकदम्बनीपसुरभौ काले घनोद्भाविते,
कान्तस्यालयमागता समदना हृष्टा जलार्द्रालका;
विद्युद्वारिदगर्ज्जितैः सचकिता त्वद्दर्शनाकाङ्क्षिणी
पादौ नूपुरलग्नकर्द्दमधरौ प्रचालयन्ती स्थिता। २२

चारु। आकर्ण्य। वयस्य, ज्ञायतां किमेतदिति।

विदू। जं भवं आणवेदि (१)।

वसन्तसेनामुपगम्य ॥ सादरं ॥ सोत्थि भोदीए (२)।

वसं। अज्ज वन्दामि; साअदं अज्जस्स। भाव, एसा छत्तधारिआ भावस्स ज्जेव्व भोदु (३)।

विटः ॥ स्वगतं ॥ अनेनोपायेन निपुणं प्रेषितोऽस्मि ॥ प्रकाशं ॥ एवं भवतु ॥ भवति वसन्तसेने।

साटोपकूटकपटानृतजन्मभूमेः
शाठ्यात्मकस्य रतिकेलिकृतालयस्य,
वेश्यापणस्य सुरतोत्सवसङ्ग्रहस्य,
दाक्षिण्यपण्यसुखनिःक्रयसिद्धिरस्तु। २४

॥ इति निष्क्रान्तः ॥

---

(१) यद्भवानाज्ञापयति।

(२) स्वस्ति भवत्यै।

(३) आर्य्य वन्दे, स्वागतमार्य्यस्य। भाव, एषा छत्रधारिका भावस्य एवं भवतु।

वसं। अज्ज मित्तेअ, कहिं तुह्माणं जूदिअरो (१)।

विदू ॥ स्वगतं॥ ही ही भोः, जूदिअरोत्ति भणन्तीए अलङ्किदो पिअवअस्सो ॥ प्रकाशं॥ भोदि, एसो खु रुक्खवाडिआए (२)।

वसं। अज्ज का तुह्माणं सुक्खरुक्खवाडिआ वुच्चदि (३)।

विदू। भोदि, जहिं ण खाईअदि ण पीइअदि (४)।

वसं ॥ स्मितङ्करोति ॥

विदू। ता पविसदु भोदी (५)।

वसं ॥जनान्तिकं॥ एत्थ पविसिअ किं मए भणिदव्वं (६)।

चेटी। जूदिअर अवि सुहो दे पदोसोत्ति (७)।

वसं। अवि पारइस्सं (८)।

(१) आर्य्य मैत्रेय कुत्र युष्माकं द्यूतकरः।

(२) आश्चर्य्यं, भो द्यूतकरइति भणन्त्या अलङ्कृतः प्रियवयस्यः। हे भवति, एष खलु वृक्षवाटिकायां।

(३) आर्य्य का युष्माकं शुष्कवृक्षवाटिका उच्यते।

(४) हे भवति, यत्र न खाद्यते न पीयते।

(५) तस्मात् प्रविशतु भवती।

(६) अत्र प्रविश्य किं मया भणितव्यं।

(७) द्यूतकर, अपि शुभस्ते प्रदोषइति।

(८) अपि पारयिष्यामि।

चेटी। अवसरोज्जेव्व दे पारइस्सदि (१)।

विदू। पविसदु भोदी (२)।

वसं ॥ प्रविश्योपसृत्य च। पुष्पैस्ताडयन्ती ॥ अइ, जूदिअर अवि सुहो दे पदोसो (३)।

चारु ॥ अवलोक्य ॥ अये वसन्तसेना प्राप्ता ॥ सहर्षमुत्थाय ॥ अयि प्रिये।

सदा प्रदोषो मम याति जाग्रतः,
सदा च मे निःश्वसतो गता निशा;
त्वया समेतस्य विशाललोचने,
ममाद्य शोकान्तकरः प्रदोषः। ७८।

॥ तत् स्वागतं भवत्यै ॥ इदमासनमत्रोपविश्यतां।

विदू। इदमासणं उववि्सदु भोदी, (४)।

नाट्येनासीनाः सर्व्वे उपविशन्ति।

चारु। वयस्य, पश्य पश्य।

वर्षोदकमुद्गिरता, श्रवणान्तविलम्बिना कदम्बेन,
एकः स्तनोऽभिषिक्तो नृपसुत इव यौवराज्यस्थः। ७९।

तद्वयस्य क्लिन्ने वाससी वसन्तसेनायाः, अन्ये प्रधानवाससी समुपनीयेतामिति।

(१) अवसर एव त्वां पारयिष्यति।

(२) प्रविशतु भवती।

(३) अपि द्यूतकर शुभस्ते प्रदोषः।

(४) इदमासनं उपविशतु भवती।

विदू। जं भवं आणवेदि (१)।

चेटी। अज्ज मित्तेअ, चिट्ठ, तुमं, अहं जेव्व अज्जअं सुस्सूसइस्सं (२) ॥ तथा करोति ॥

विदू ॥ अपवारितकेन ॥ भो वअस्स, पुच्छामि दाव तत्थ भोदिं किं वि (३)।

चारु। एवं क्रियतां।

विदू ॥ प्रकाशं ॥ अध किंणिमित्तं उन ईदिसे पणट्ठ चन्दालोए दुद्दिणअन्धआरे आअदा भोदी (४)।

चेटी। अज्जए उज्जओ बंह्मणो (५)।

वसं। णं, णिउणोत्ति भणाहि (६)।

चेटी। एसा क्खु अज्जआ एव्वं पुच्छिदुं आअदा केत्तिअं ताए रअणावलीए मुल्लन्ति (७)।

(१) यद्भवानाज्ञापयति।

(२) आर्य्य मैत्रेय तिष्ठ त्वं, अहमेवार्य्यां शुश्रूषयिष्यामि।

(३) भो वयस्य प्रच्छामि तावत्तत्रभवतीं किमपि।

(४) अथ किं निमित्तं पुनरीदृशे प्रनष्टचन्द्रालोके दुर्दिनान्धकारे आगता भवती।

(५) आर्य्ये उज्ज्वलोब्राह्मणः।

(६) ननु निपुणइति भण।

(७) एषा खलु आर्य्या एवं प्रष्टुमागता कियत्तस्याः रत्नावल्यामूल्यमिति।

विदू ॥ जनान्तिकं॥ भो, भणिदं मए, जधा अप्पमुल्ला रअणावली बहुमुल्लं सुवणभण्डअं ण परितुट्ठा अवरं मग्गिदुं आअदा (१)।

चेटी। सा क्खु अज्जआए अत्तण केरकेत्ति भणिअ जूदे हारिदा। सोअ सहिओ राआवत्थआरी ण आणीअदि कहिं गदोत्ति (२)।

विदू। भोदि, मंतिदं ज्जेव्व मन्तीअदि (३)।

चेटी। जाव सो अण्णेसीअदि। ताव एदं जेव्व गेह्न सुवण्ण भण्डअं। इति दर्शयति (४)।

विदू। विचारयति।

चेटी। अदिमेत्तं अज्जो णिज्झाअदि, ता किं दिट्ठ पुरुव्वो दे (५)।

विदू। भोदि, सिप्पकुसलदाए ओबन्धेदि दिट्ठिं (६)।

(१) भो, भणितं मया, यथा अल्पमूल्या रत्नावली बहु मूल्यं सुवर्णभाण्डं न परितुष्टा अपरं याचितुमागता।

(२) सा खलु आर्य्याया आत्मनः इति भणित्वा द्यूते हारिता, सच सभिकः राजावश्यकारी, न ज्ञायते कुत्र गत इति।

(३) हे भवति मन्त्रितमेव मन्त्र्यते।

(४) यावत्सोऽन्विष्यते, तावदेव गृहाण सुवर्णभाण्डं।

(५) अतिमात्रमार्य्योनिर्ध्यायति; तत्किं दृष्टपूर्व्वस्ते।

(६) हे भवति, शिल्पकुशलतया अवबध्नाति दृष्टिं।

चेटी। अज्ज वञ्चिदोम्हि, दिट्ठीए तं जेव्व एदं सुवस्स भण्डअं (१)।

विदू ॥ सहर्षं ॥ भो वअस्स, तं जेव्व एदं सुवस्सभण्डअं जं अह्माणं गेहे चोरेहिं अवहृदं (२)।

चारु। वयस्य।

योऽस्माभिश्चिन्तितो व्याजः कर्त्तुं न्यासप्रतिक्रिया,
स एव प्रसुतोऽस्माकं किन्तु सत्यं विडम्बना। |७|

विदू। भो वअस्स सच्चं, सवामि बह्मणेण (३)।

चारु। प्रियं नः प्रियं।

विदू ॥ जनान्तिकं ॥ भो, पुच्छामि णं कुदो एदं समासादिदन्ति (४)।

चारु। को दोषः।

विदू ॥ चेट्याः कर्णे ॥ एवं विअ (५)।

चेटी ॥ विदूषकस्य कर्णे ॥ एवं विअ (६)।

चारु। किमिदं कथ्यते। किम्वयं वाह्याः।

---

(१) आर्य्य वञ्चितोऽस्मि दृष्ट्या, तदेवेदं सुवर्णभाण्डं।

(२) भो वयस्य, तदेवेदं सुवर्णभाण्डं यदस्माकं गृहे चौरैरपहृतं।

(३) भो वयस्य, सत्यं, शपामि ब्राह्मणेन।

(४) भो, पृच्छामि ननु कुत इदं समासादितमिति।

(५) एवमिव।

(६) एवमिव।

विदू ॥ चारुदत्तस्य कर्णे ॥ एवं विअ (१)।

चारु। भद्रे, सत्यं तदेवेदं सुवर्णभाण्डं।

चेटी। अज्ज अधइं (२)।

चारु। भद्रे, न कदाचित्प्रियनिवेदनं निःफलीकृतं मया। तद्गृह्यतां पारितोषिकमिदमङ्गुलीयकमिति ॥ अनङ्गुलीयकं हस्तमवलोक्य लज्जां नाटयति।

वसं ॥ आत्मगतं ॥ अदोजेव्व कामीअसि (३)।

चारु। जनान्तिकं। भो कष्टं।

धनैर्वियुक्तस्य नरस्य लोके किञ्जीवितेनादित एव तावत्।
यस्य प्रतीकारनिरर्थकत्वात्कोपप्रसादा विफलीभवन्ति।

अपिच।

पक्षविकलश्च पक्षी, शुष्कश्च तरुः, सरश्च जलहीनं,
सर्पश्चोद्धृतदंष्ट्रस्तु लोके दरिद्रश्च।

अपिच।

शून्यैर्गृहैः खलु समाः पुरुषा दरिद्राः,
कूपैश्च तोयरहितैस्तरुभिश्च शीर्णैः;
यद्दृष्टपूर्व्वजनसङ्गमविस्मृताना
मेवं भवन्ति विफलाः परितोषकालाः।

---

(१) एवमिव।

(२) आर्य्य अथकिं।

(३) अतएव काम्यसे।

विदू। भो अलं अदिमेत्तं सन्तप्पिदेण ॥ प्रकाशं। सपरिहासं ॥ भोदि, समप्पीअदु मम केरिआए ह्राणसाडिआ (१)।

वस। अज्ज चारुदत्त, जुत्तं णेदं इमाए रअणावलीए इमं जणं तुलइदुं (२)।

चारु ॥ सविलक्षस्मितं ॥ वसन्तसेने, पश्य, पश्य;

कः श्रद्धास्यति भूतार्थं सर्व्वो मां तुलयिष्यति,
शङ्कनीया हि लोकेऽस्मिन्निःप्रतापा दरिद्रता। ४३

विदू। हञ्जे, किं भोदीए इध जेव्व सुविदव्वं (३)।

चेटी ॥ विहस्य ॥ अज्जमित्तेअ, अदिमेत्तं दाणिं उज्जअं अत्ताणअं दंसेसि (४)।

विदू। भो वअस्स, एसो क्खु उस्सारअंतो विअ सुहोवविट्ठं जणं पुणोवि वित्थारवारिधाराहिं पविट्ठो पज्जणो (५)।

चारु। सम्यगाह भवान्।

---

(१) भो अलं, अतिमात्रसन्तापितेन हे भवति, समर्प्यतां मम स्नानशाटिका।

(२) आर्य्य चारुदत्त, युक्तं नेदं, अनया रत्नावल्या इमं जनं तुलयितुं।

(३) चेटि, किं भवत्या इहैव सुप्तव्यं।

(४) आर्य्य मैत्रेय, अतिमात्रमिदानीं उद्यतमात्मानं दर्शयसि।

(५) भो वयस्य एष खलु उत्सारयन्निव सुखोपविष्टं जनं पुनरपि विस्तारवारिधाराभिः प्रविष्टः पर्जन्यः।

अमूर्हि भिन्नाजलदान्तराणि पङ्कान्तराणीव मृणालसूच्यः।
पतन्ति चन्द्रव्यसनाद्विमुक्ता दिवोऽश्रुधारा इव वारिधाराः।

अपिच। धाराभिरार्य्यजनचित्तसुनिर्मलाभि
खण्डाभिरर्ज्जुनशरप्रतिकर्कशाभिः,
मेघाः स्रवन्ति, बलदेवपटप्रकाशाः,
शक्रस्य मौक्तिकनिधानमिवोद्गिरन्तः।

प्रिये। पश्य, पश्य;

एतैः पिष्टतमालवर्णकनिभैरालिप्तमम्भोधरैः
संसक्तैरुपवीजितं सुरभिभिः शीतैः प्रदोषानिलैः,
एषाम्भोदसमागमप्रणयिनी स्वच्छन्दमभ्यागता
रक्ताकान्तमिवाम्बरम्प्रियतमा विद्युत्समालिङ्गति।

वसं ॥ शृङ्गारभावं नाटयन्ती चारुदत्तमालिङ्गति॥

चारु ॥ स्पर्शं नाटयन्प्रत्यालिङ्ग्य॥

भोमेघ, गम्भीरतरं नद त्वं, तव प्रसादात्स्मरपीडितं मे,
संस्पर्शरोमाञ्चितजातरागं कदम्बपुष्पत्वमुपैति गात्रं।

विदू। दासीए पुत्त दुद्दिण, अणज्जो दाणिं सि तुमं; जं एव्वं भोदिं विज्जुआए भाआवेसि (१)।

चारु वयस्य, नार्हस्युपालब्धुं।

वर्षशतमस्तु दुर्दिनमविरतधारं, शतह्रदाः स्फुरन्तु,
अस्मद्विधदुर्लभया यदहं प्रियया परिष्वक्तः।

---

(१) दास्याः पुत्र, दुर्दिन, अनार्य्य इदानीमसि त्वं यदेवं भवतीं विद्युता भीषयसि।

अपिच, वयस्य;

धन्यानि तेषाङ्खलु जीवितानि, ये कामिनीनां गृहमागतानां,
आर्द्राणि मेघोदकशीतलानि गात्राणि गात्रेषु परिष्वजन्ति।

प्रिये, वसन्तसेने;

स्तम्भेषु प्रचलितवेदिसञ्चयान्तं
शीर्णत्वात्कथमपि धार्य्यते वितानं;
एषा च स्फुटितसुधाद्रवानुलेपा
संक्लिन्ना सलिलभरेण चित्तभित्तिः।

॥ ऊर्द्धमवलोक्य ॥ अये इन्द्रधनुः! प्रिये, पश्य, पश्य;

विद्युज्जिह्वेनेदं, महेन्द्रचापोच्छ्रितायतभुजेन,
जलधरविवृद्धहनुना, विजृम्भितमिवान्तरीक्षेण।

तदेह्यभ्यन्तरमेव प्रविशावः ॥ इत्युत्थाय परिक्रामति ॥

प्रिये, पश्य।

तालीषु तारविटपेषु मन्दं, शिलासु रूक्षं, सलिलेषु चण्डं,
सङ्गीतवीणा इव ताड्यमानास्तालानुसारेण पतन्ति धाराः।

॥ इति निष्क्रान्ताः सर्व्वे ॥

दुर्द्दिनोनाम पञ्चमोऽङ्कः।

## अथ षष्ठोऽङ्कः।

॥ ततः प्रविशति चेटी॥

चेटी। कधं अज्जवि अज्जआ ण विवुज्झदि; भोदु, पविसिअ पडिबोधइस्सं (१)।

॥ इति नाट्येन परिक्रामति॥ ततः प्रविशत्याच्छादितशरीरा प्रसुप्ता वसन्तसेना।

चेटी ॥ निरूप्य॥ उत्थेदु, उत्थेदु अज्जआ, पभादं संवुत्तं (२)।

वसं ॥ प्रतिबुध्य॥ कधं, रत्ति ज्जेव्व पभादं संवुत्तं (३)।

चेटी। अह्माणं एसो पभादो, अज्जआए उण रत्ति ज्जेव्व (४)।

वसं। हञ्जे, कहिं उण तुह्माणं जूदिअरो (५)।

---

(१) कथमद्यापि आर्य्या न विबुध्यते? भवतु, प्रविश्य प्रतिबोधयिष्यामि।

(२) उत्तिष्ठतु, उत्तिष्ठतु, आर्य्या; प्रभातं सम्वृत्तं।

(३) कथं रात्रिरेव प्रभातं सम्वृत्तं।

(४) अस्माकमेतत्प्रभातं, आर्य्यायाः पुनारात्रिरेव।

(५) चेटि कुतः पुनर्युष्माकं द्यूतकरः।

चेटी। अज्जए, वड्ढमाणअं समादिसिअ, पुप्फकरण्डअं जिण्णुज्जाणं गदो अज्जचारुदत्तो (१)।

वसं। किं समादिसिअ पुप्फकरण्डअं जिण्णुज्जाणं गदो अज्जचारुदत्तो (२)।

चेटी। जोएहि रादीए पवहणं, वसन्तसेना गच्छदुत्ति (३)।

वसं। हञ्जे, कहिं मए गन्तव्वं (४)।

चेटी। अज्जए, जहिं चारुदत्तो (५)।

वसं॥ चेटीं परिष्वज्य॥ हञ्जे, सुट्ठु ण णिज्झाइदो रादीए, ता अज्ज पच्चक्खं पेक्खिस्सं। हञ्जे, किं पविट्ठा अहं इह अब्भन्तरचतुस्सालअं (६)।

चेटी। ण केवलं अब्भन्तरचतुस्सालअं, सव्वजणस्स वि हिअअं पविट्ठा (७)।

(१) आर्य्ये वर्द्धमानकं समादिश्य, पुष्पकरण्डकं जीर्णोद्यानं गतआर्य्यचारुदत्तः।

(२) किं समादिश्येत्यादि पूर्व्ववत्।

(३) योजय रात्रौ प्रवहणं, वसन्तसेना गच्छत्विति।

(४) चेटि, कुत्र मया गन्तव्यं।

(५) आर्य्ये, यत्र चारुदत्तः।

(६) चेटि, सुष्ठु न निर्ध्यातो रात्रौ तदद्य प्रत्यचं प्रेचिष्ये। चेटि, किं प्रविष्टा अहमिहाभ्यन्तरचतुःशालं।

(७) न केवलं अभ्यन्तरचतुःशालकं, सर्व्वजनस्यापि हृदयं प्रविष्टा।

वसं अविसन्तप्पदि चारुदत्तस्स परिअणो (१)।

चेटी। सन्तपिस्सदि (२)।

वसं। कदा (३)।

चेटी। जदो अज्जआ गमिस्सदि (४)।

वसं। तदो मए पठमं सन्तपिदव्वं ॥ सानुनयं ॥ हञ्जे, गेह्न एदं रअणावलिं। मम बहिणिआए अज्जा धूदाए गदुअ, समप्पेहि भणिदव्वं च। अहं सिरिचारुदत्तस्स गुणणिज्जिदा दासी, तदा तुह्माणं पि। ता एसा तुहज्जेव कण्ठाहरणं होदु रअणावली (५)

चेटी। अज्जए, कुप्पिस्सदि चारुदत्तो अज्जाए दाव (६)।

वसं। गच्छ ण कुप्पिस्सदि (७)।

---

(१) अपि सन्तप्यते चारुदत्तस्य परिजनः।

(२) सन्तप्स्यति।

(३) कदा।

(४) यदा आर्य्या गमिष्यति।

(५) तदा मया प्रथमं सन्तप्तव्यं। चेटि, गृहाण इमां रत्नावलीं, मम भगिन्यै आर्य्याधूतायै गत्वा समर्पय; वक्तव्यञ्च, अहं श्रीचारुदत्तस्य गुणनिर्जिता दासी, तदा युष्माकमपि, तदेषा तवैव कण्ठाभरणं भवतु रत्नावली।

(६) आर्य्ये, कुपिष्यति चारुदत्त आर्य्यायै तावत्।

(७) गच्छ, न कुपिष्यति।

चेटी ॥ गृहीत्वा ॥ जं आणवेसि (१)।

॥ इति निष्क्रम्य पुनः प्रविशति ॥

चेटी। अज्जए, भणादि अज्जा धूदा। अज्जउत्तेण तुह्माणं पसादीकदा, ण जुत्तं मम एदं गेह्णिदुं। अज्जउत्तो ज्जेव्व मम आहरणविसेसोत्ति जाणादु भोदी (२)।

॥ ततः प्रविशति दारकं गृहीत्वा रदनिका ॥

रदनिका। एहि वच्छ, सअडिआए कीलम्ह (३)।

दार ॥ सकरुणं॥ रदनिए, किं मम एदाए मट्टिआ सअडिआए। तं ज्जेव्व सोवण्णसअडिअं देहि (४)।

रद ॥ सनिर्वेदं निश्वस्य॥ जाद, कुदो अह्माणं सुवण्णववहारो। तादस्स पुणोवि रिद्धीए सुवण्णसअडिआए कीलिस्सासि। ता जाव विणोदेमि णं, अज्जआ वसन्तसेणाए समीवं उवसप्पिस्सं॥ उपसृत्य॥ अज्जए पणमामि (५)।

---

(१) यदाज्ञापयसि।

(२) आर्य्ये, भणति आर्य्या धूता, आर्य्यपुत्रेण युष्माकं प्रसादीकृता, न युक्तं ममैतां ग्रहीतुं। आर्य्यपुत्र एव ममाभरणविशेष इति जानातु भवती।

(३) एहि, वत्स, शकटिकया क्रीडयावः।

(४) रदनिके, किं ममैतया मृत्तिकाशकटिकया, तामेव सुवर्णशकटिकां देहि।

(५) तात, कुतोऽस्माकं सुवर्णव्यवहारः तातस्य पुनरपि

वसं। रअणिए, साअदं दे। कस्स उण अअं दारओ, अनलंकिदसरीरोवि चन्दमुहो आणन्देदि मम हिअअं (१)।

रद। एसो क्खु अज्जचारुदत्तस्स पुत्तो रोहसेणो णाम (२)।

वसं ॥ बाहू प्रसार्य्य॥ एहि मे पुत्तअ, आलिंग ॥ इति अङ्के उपवेश्य॥ अणुकिदं अणेण पिदुणोरूवं (३)।

रद। ण केवलं रूवं, सीलं वि तक्केमि। एदोणा अज्ज चारुदत्तो अत्ताणअं विनोदेदि (४)।

वसं। अध किंनिमित्तं एसो रोअदि (५)।

च्छया सुवर्णशकटिकया क्रीडिष्यसि। तद्यावद्दिनोदयाम्येनं, आर्य्यावसन्तसनायाः समीपमुपसर्पिष्यामि। आर्य्ये प्रणमामि।

(१) रदनिके स्वागतं ते, कस्य पुनरयं दारकः अनलङ्कृतशरीरोऽपि चन्द्रमुखआनन्दयति मम हृदयं।

२) एष खलु आर्य्यचारुदत्तस्य पुत्रोरोहसेनोनाम।

(३) एहि मे पुत्रक, आलिङ्गय। अनुकृतं अनेन पितृरूपं।

(४) न केवलं रूपं, शीलमपि तर्कयामि। एतेनार्य्यचारुदत्त आत्मानं विनोदयति।

(५) अथ किंनिमित्तं एषरोदिति।

रद। एदिणा पडिवेसिअगहवइदारअकेरिआए सुवसअडिआए कीलिदं, तेण अ सा णीदा; तदो उण तं मग्गं तस्स मए इअं मट्टिआसअडिआ कदुअ दिण्णा। तदो भणादि, रदणिए किं मए एदाए मट्टिआसअडिआए, तं ज्जेव्व सोवसअडिअं देहित्ति (१)।

वसं। हद्धी, हद्धी, अअं पि णाम परसंपत्तीए सन्तप्पदि। भअवं कदंत पोक्खरवत्तपडिदजलविंदुसरिसेहिं कीलसि तुमं पुरिसभाअधेओहिं ॥इति सास्रा॥ जाद मा रोद, सोवण्णसअडिआए कीलिस्ससि (२)।

दार। रदणिए, का एसा? (३)

वसं। दे पिदुणो गुणणिज्जिदा दासी (४)।

(१) एतेन प्रतिवेशिकगृहपतिदारकसतया सुवर्णशकटिकया क्रीडितं, तेन च सा नीता; ततः पुनस्तां याचतोमया इयं मृत्तिकाशकटिकाकृत्वा दत्ता। तदा भणति, रदनिके किं मम एतया मृत्तिकाशकटिकयातामेव सुवर्णशकटिकां देहीति।

(२) हा धिक्, हा धिक्, अयमपि नाम परसम्पत्त्या सन्तप्यते। भगवन् कृतान्त, पुष्करपात्रपतितजलविन्दुसदृशैः क्रीडसि त्वं पुरुषभागधेयैः। तात, मा रोदिहि, सुवर्णशकटिकया क्रीडिष्यसि।

(३) रदनिके, का एषा?

(४) ते पितुर्गुणनिर्जिता दासी।

रद। जाद, अज्जआ दे जणणी भोदि (१)।

दार। रदणिए, अलिअं तुमं भणासि, जइ अह्माणं अज्जआ जणणी, ता कीस अलंकिदाए? (२)।

वसं। जाद, मुद्धेए मुहेण अदिकरुणं मंतेसि ॥ नाट्येना भरणान्यवतार्य्य, रुदंती ॥ एसा दाणिं दे जणणी संवुत्ता। ता गेह्ल एदं अलंकारअं, सोवस्सअडिअं घडावेहि (३)।

दार। अवेहि, ण गेह्लिस्सं, रोदसि तुमं (४)।

वसं ॥ अश्रूणि प्रमृज्य॥ जाद, न रोदिस्सं; गछ, कील, ॥ अलंकारैर्मृछकटिकं पूरयित्वा ॥ जाद, कारेहि सोवस्सअडिअं (५)।

॥ इति दारकमादाय निष्क्रान्ता रदनिका ॥

(१) तात, आर्य्या ते जननी भवति।

(२) रदनिके, अलीकं त्वं भणसि, यद्यस्माकं आर्य्या जननी, तत्किमर्थं अलङ्कृता?

(३) तात, मुग्धेन मुखेनातिकरुणं मन्त्रयसि। एषा इदानीं ते जननी संवृत्ता। तत् गृहाणैतं अलङ्कारं, सुवर्णशकटिकां कारय।

(४) अपेहि, न ग्रहीष्यामि, रोदिषि त्वं।

(५) तात न रोदिष्यामि, गच्छ, क्रीड। तात, कारय सौवर्णशकटिकां।

प्रविश्य प्रवहणाधिरूढश्चेटः ॥ रदणिए, रदणिए, णिवेदेहि अज्जआए वसन्तसेणाए, ओहारिअं पक्खदुआरए सज्जं पवहणं चिट्ठदि (१)।

प्रविश्य रदनिका ॥ अज्जए, एसोवड्ढमाणओविण्णवेदि पक्खदुआरए सज्जं पवहणंत्ति (२)।

वसं। हंजे, चिट्ठ मुहुत्तं, जाव अहं अत्ताणअं पसाधेमि (३)।

चेटः। ही ही भोः, मए वि जाणत्थलके विसुमलिदे; ता जाव गेह्णिअ आअच्छामि। एदे णस्साअज्जुकट्टुआ बइल्ला। भोदु, भोदु, पवहणेण ज्जेव्व गदागदिं करिस्सं ॥ इति निष्क्रान्तश्चेटः (४)॥

वसं। हंजे, उवणेहि मे पसाहणं, अत्ताणअं पसाहइस्सं (५) ॥ इति प्रसाधयन्ती स्थिता ॥

---

(१) रदनिके, रदनिके, निवेदय आर्य्यायै वसन्तसेनायै, अपवारितं पक्षद्वारके सज्जं प्रवहणं तिष्ठति।

(२) आर्य्ये, एष वर्द्धमानकोविज्ञापयति पक्षद्वारे सज्जं प्रवहणमिति।

(३) चेटि, तिष्ठ मुहूर्त्तं, यावत् अहमात्मानं प्रसाधयामि।

(४) ही ही भोः, मयापि यानास्तरणं विस्मृतं, तत् यावत् गृहीत्वा आगच्छामि। एते नासिकारज्जुकटुकावलीवर्द्दाः। भवतु, भवतु, प्रवहणेनैव गतागतिं करिष्यामि।

(५) चेटि, उपनय मे प्रसाधनं, आत्मानं प्रसाधयिष्यामि।

प्रविश्य प्रवहणाधिरूढः स्थावरकश्चेटः ॥ आणत्तह्मि लाअशालशंठाणेण; स्थावलआ, पवहणं गेण्हिअ, पुप्फकलं डअं जिण्णुज्जाणं तुलिदं आगच्छेहित्ति। भोदु, तहिं जेव्व गच्छामि। वहध, वइल्ला, वहध ॥ परिक्रम्यावलोक्य च ॥ कधं, गामशअलेहिं लुद्धे मग्गे; किं दाणिं एत्थ कलइस्सं ॥ साटोपं॥ अले, अले, ओशलध;॥ आकर्ण्य॥ किं भणाध? इसे कस्स केलके पवहणेत्ति? एसे लाअशालशंठाणकेलके पवह णेत्ति। ता शिग्घ ओसलध ॥ अवलोक्य॥ कधं, एशे अवले, शहिअं विअ मं पेक्खिअ सहसज्जेव्व जूदपलाइदे विअ जूदि अले ओहालिअ अत्ताणअं अवदो अवक्कंते? ता को उण एसो? अधवा किं मम एदिणा? तुलिदं गमिस्सं। अले, अले, गामेलुआ, ओशलध। किं भणाध? मुहुत्तअं चिट्ठ चक्कप डिवट्टिअं देहित्ति। अले, अले, लाअशालशंठाणकेलके हगे, शूले, चक्कपडिवट्टिअं दइस्सं। अधवा, एशे एआई तवस्सी, ता एवं कलेमि। एदं पवहणं अज्जचारुदत्तस्स लुक्खवाडि आए पक्खदुआलके थावेमि ॥ इति प्रवहणं संस्थाप्य॥ एसह्मि आअदो (१)॥ इति निष्क्रान्तः॥

---

(१) आज्ञप्तोऽस्मि राजश्यालकसंस्थानेन; स्थावरक; प्रव हणं गृहीत्वा पुष्पकरण्डकं जीर्णोद्यानं त्वरितमागच्छेति। भवतु, तत्रैव गच्छामि। वहत, बलीवर्दौ वहत। कथं ग्राम शकटैरुद्धो मार्गः; किमिदानीं अत्र करिष्यामि। अरे, अरे,

चेटी। अज्जए, णेमिसद्दो विअ सुणीअदि। ता आअदो पवहणो (१)।

वसं। हञ्जे, गच्छ, तुवरेदि मे हिअअं; ता आदेसेहि पक्खदुआरअं (२)।

चेटी। एदु, एदु, अज्जआ (३)।

वसं ॥ परिक्रम्य ॥ हञ्जे, वीसम तुमं (४)।

चेटी। जं अज्जआ आणवेदि (५) ॥इति निष्क्रान्ता॥

अनुसरत। किं भणत? एष कस्य कृते प्रवहणइति? एष राजश्यालकसंस्थानस्य कृते प्रवहणइति, तत् शीघ्रमपसरत। कथमेष अपरः, सभिकमिव मां प्रेक्ष्य सहसैव द्यूतपलायितइव द्यूतकरोऽपवार्य्यात्मानं अन्यतोऽपक्रान्तः? तत्कः पुनरेष? अथवा किं ममैतेन? त्वरितं गमिष्यामि। अरे, अरे, ग्राम्या, अपसरत, अपसरत। किं भणत? मुहूर्त्तं तिष्ठ, चक्रपरिवर्त्तनं देहीति। अरे, अरे, राजश्यालसंस्थानस्य अहं शूरः चक्रपरिवृत्तिं दास्यामि। अथवा, एष एकाकी तपस्वी, तदेवं करोमि। एतं प्रवहणं आर्य्यचारुदत्तस्य वृक्षवाटिकायाः पक्षद्वारके स्थापयामि। एषोऽस्मि आगतः।

(१) आर्य्ये, नेमिशब्दइव श्रूयते तदागतः प्रवहणः।

(२) चेटि, गच्छ; त्वरयति मे हृदयं, तदादिश पक्षद्वारं।

(३) एतु, एतु, आर्य्या।

(४) चेटि, विश्रम त्वं।

(५) यदार्य्या ज्ञापयति।

वर्ध। दक्षिणाक्षिस्पन्दं सूचयित्वा ॥ प्रवहणमधिरुह्य च॥ किं णेदं फुरदि दाहिणं लोअणं। अधवा, चारुदत्तस्स जेव्व दंसणं अणिमित्तं पमज्जिस्सदि (१)।

प्रविश्य स्थावरकश्चेटः॥ ओसालिदा मए सअडा, ता जाव गच्छामि ॥ इति नाट्येनाधिरुह्य चालयित्वा, स्वगतं॥ भालिके पवहणं। अधवा, चक्कपडिवट्टिआए पडिस्संतस्स भालिके पवहणे पडिभासदि। भोदु, गमिस्सं। जाध, गोणा, जाध (२)।

नेपथ्ये। अरे रे दोवारिआ, अप्पमत्ता सएसु सएसु गुम्मट्ठाणेसु होध। एसो अज्ज गोवालदारकओ उत्तिअं भंजिअ, उत्तिवालिअं वावादिअ, बन्धणं भेदिअ, परिब्भट्ठो अवक्कमदि ता गेह्न गेह्न (३)।

---

(१) किं नेदं स्फुरति दक्षिणं लोचनं। अथवा, चारुदत्तस्यैव दर्शनमनिमित्तं प्रमञ्जयिष्यति।

(२) अपसारिता मया शकटाः, तत् यावत् गच्छामि। भारवत् प्रवहणं, अथवा चक्रपरिवृत्त्या परिश्रान्तस्य सभारं प्रवहणं प्रतिभासते। भवतु, गमिष्यामि, यात, वृषभा, यात।

(३) अरे रे दौवारिका, अप्रमत्ताः स्वेषु स्वेषु गुल्मस्थानेषु भवत। एषोऽद्य गोपालदारको गुप्तीं भंक्त्वा, गुप्तिपालकं व्यापाद्य, बन्धनं भित्त्वा, परिभ्रष्टः अपक्रामति। तद्गृह्णीत तद्गृह्णीत।

प्रविश्य पटाक्षेपेण संभ्रान्त, एकचरणलग्ननिगडोऽवगुण्ठित, आर्य्यकः परिक्रामति।

चेटः ॥ स्वगतं ॥ महंते णअलीए संभमे उप्पणे; ता तुलिदं तुलिदं गमिस्सं(१) ॥ इति निष्क्रान्तः ॥

आर्य्यकः।

हित्वाहं नरपतिबन्धनापदेशव्यापत्तिव्यसनमहार्णवम्नराणां, पादाग्रस्थितनिगडैकपाशकर्षी, प्रभ्रष्टोगजइव बन्धनाद्भ्रमामि।

भो, अहं खलु सिद्धादेशजनितपरित्रासेन राज्ञा पालकेन घोषादानीय, विशसने गूढागारे बन्धनेन बद्धः। तस्माच्च प्रियसुहृच्छर्विलकप्रसादेन, बन्धनात्परिभ्रष्टोऽस्मि ॥ अश्रूणि विमृज्य ॥

भाग्यानि मे यदि तदा मम कोऽपराधो,
यद्बन्धनागइव संयमितोऽस्मि तेन।
दैवी च सिद्धिरपि लङ्घयितुं न शक्या
गम्योनृपोबलवता सह कोविरोधः। ॥२॥

तत्कुत्र गच्छामि मन्दभाग्यः ॥ विलोक्य ॥ इदं कस्यापि साधोरनावृतपक्षद्वारं गेहं।

इदं गृहं भिन्नमनायतार्गलं, विशीर्णसन्धिस्च, महाकपाटः,
ध्रुवं कुटुम्बी व्यसनाभिभूतां, दशां प्रपन्नोमम तुल्यभाग्यः।

---

(१) महान् नगर्य्यां संभ्रमः उत्पन्नः; तत् त्वरितं त्वरितं गमिष्यामि।

तदत्र तावत्प्रविश्य तिष्ठामि।

नेपथ्ये। जाध, गोणा, जाध (१)।

आर्य्यकः ॥ आकर्ण्य ॥ अये प्रवहणं इतएवाभिवर्त्तते।

भवेद्गोष्ठीयानं, न च विषमशीलैरधिगतं;

वधूसंयानं वा, तदभिगमनोपस्थितमिदम्।

बहिर्नेतव्यं वा प्रवरजनयोग्यं विधिवशा

द्विविक्तलाच्छून्यं मम खलु भवेद्देव विहितं। (2)

॥ ततः प्रवहणेन सह प्रविश्य वर्द्धमानकश्चेटः। ही मान हे; आणीदे मए जाणथलके। रदणिए, णिवेदेहि अज्ज आए वसंतसेणाए, अवत्थिदे सज्जे पवहणे अहिरुहिअ, पुप्फ करण्डअं जिण्णुज्जाणं गच्छदु अज्जआ (२)।

आर्य्यकः ॥ आकर्ण्य॥ गणिकाप्रवहणमिदं, वहिर्य्यानञ्च; भवत्वधिरोहामि ॥ इति स्वैरमुपसर्पति ॥

चेटः ॥ श्रुत्वा॥ कधं, णेउलसद्दे, ता आअदा क्खु अज्जआ, अज्जए, इमे णस्सकट्टुआ वइल्ला। ता पट्ठदो जव्व आलुहदु अज्जआ (३)।

---

(१) यात, वृषभा, यात।

(२) आश्चर्य्यं; आनीतं मया यानास्तरणं। रदनिके, निवेदय आर्य्यायै वसन्तसेनायै, अवस्थितं सज्जं प्रवहणं अधि रुह्य पुष्पकरण्डकं जीर्णोद्यानं गच्छतु आर्य्या।

(३) कथं, नूपुरशब्दः; तदागता खल्वार्य्या। आर्य्ये, इमौ नासिकारज्जुकट्टुकौ बलीवर्द्दौ, तत्पृष्ठतएव रोहतु आर्य्या।

॥ आर्य्यकः तथा करोति ॥

चेटः। पादुफालचालिदाणं णिउलाणं वीसंतोसद्दो, भउक्कंते अ पवहणे, तधा तक्केमि संपदं अज्जआए आलूढाए होदव्वं; ता गच्छामि। जाध, गोणा, जाध (१) ॥ इति परिक्रामति ॥

प्रविश्य वीरकः ॥ अरे रे, अरे जअ, जअमाण, चंदणअ, समं वट्टइ णरवइहिअअं च, बंधणं चावि। अले, पुरत्थिमे पदोलीदुआरे चिट्ठ तुमं; तुमं पि पछिमे; तुमं पि दक्खिणे; तुमं उत्तरे। जोवि एसो पाआरखंडो एदमभिरुहिअ चंदणेण समं गदुअ अवलोएमि। एहि, चंदणअ, एहि, इदोदाव (२)।

प्रविश्य संभ्रान्तश्चन्दनकः। अरे, रे, वीरअ, विरअ, विसलु, भीमङ्गअ, दंडकाल अ, दंडसूरप्पमुहा।

आअच्छध वीसद्धा, तुरिअं जत्तहं लड्डु करेजाह,
लच्छी जेण ण रस्रो पहवइ गोत्तन्तरं गन्तुं। ८१

(१) पादोत्फालचालितानां नूपुराणां विश्रान्तः शब्दः, भाराक्रान्तञ्च प्रवहणं, तथा तर्कयामि साम्प्रतं आर्य्यया आरूढया भवितव्यं; तद्गच्छामि, यात, गोणा, यात।

(२) अरे रे, अरे जय, जयमान, चन्दनक, समं व्रजति नरपतिहृदयं च, बन्धनं चापि। अरे पुरस्तात् प्रतोलीद्वारे तिष्ठ त्वं; त्वमपि पश्चिमे; त्वमपि दक्षिणे; त्वमपि उत्तरे। योऽपि एष प्राकारखण्डः एतमभिरुह्य, चन्दनेन समं गत्वा, अवलोकयामि। एहि, चन्दनक, एहि, इतस्तावत्।

अविअ।

उज्जाणेसु, सहासु अ, मग्गे, णअरीए, आपणे, घोसे,
तं, तं, जोहह तुरिआ, संका वा जाअए जत्थ।
रे, रे, वीरअ, किं दरिसेसि, भणाहि दाव वीसद्धं;
भेत्तूण अ बंधणअं को सो गोवालदारअं हरइ,
कस्स अट्ठमो दिणअरो, कस्स चउत्थोअ वट्टदे चंदो,
छट्ठोअ भग्गवगहो, भूमिसुओ पंचमो कस्स,
भण, कस्स जम्मछट्ठो जीवो, णवमोतेह अ सूरसुओ।
जीअंते चंदणए, को सो गोवालअं हरइ युग्मं (१)।

(१) अरे रे वीरक, विरज, विशल्य, भीमाङ्गद, दण्डकाल, दण्डशूरप्रमुखाः।

आगच्छत विश्रब्धास्त्वरितं यात्रां लघु कुरुत,
लक्ष्मीर्येन न राज्ञः प्रभवति गोत्रान्तरं गन्तुं।

अपिच।

उद्यानेषु, सभासु, च, मार्गे, नगर्य्यां, आपणे, घोषे,
तं, तं, अन्वेषयत त्वरितं, शङ्का वा जायते यत्र।
रे रे वीरक, किं दर्शयसि, भणसि तावत् विश्रब्धं,
भित्वा च बन्धनकं कः स गोपालदारकं हरति,
कस्याष्टमोदिनकरः, कस्य चतुर्थश्च वर्त्तते चन्द्रः,
षष्ठश्च भार्गवग्रहो, भूमिसुतः पञ्चमः कस्य;
भण, कस्य जन्मषष्ठोजीवो, नवमस्तथैव सूरसुतः,
जीवति चन्दनके, कः स गोपालकं हरति।

वीरकः। . भड चंदणआ, अवहरइ कोवि तुरिअं। चंद णअ, सवामि तुज्ज हिअएण, जइ अद्धूदइ दिनअरे गोवा लअदारओ खुडिदो (१)।

चेटः। जाध, गोणा, जाध (२)।

चंद ॥ दृष्ट्वा ॥ अरे, रे, पेक्ख, पेक्ख; ओहाडिओ पव हणो वज्जइ मज्झेण राअमग्गस्स। एदं ताव विआरह, कस्स, कहिं पवसिओ पवहणो (३)।

वीरकः ॥ अवलोक्य ॥ अरे, पवहणवाहआ, मा दाव एदं पवहणं वाहेहि। कस्स केरकं एदं पवहणं? कोवा इध आरूढो? कहिं वा वच्चदि? (४)

(१) हे भट चंदनक, अपहरति कोऽपि त्वरितं, चन्द नक, शपामि तव हृदयेण, यथा अर्द्धोदितदिनकरे गोपालक दारकः खुटितः पलायित इत्यर्थः।

(२) यात, गोणा, यात।

(३) अरे, रे, पश्य, पश्य; अपवारितं प्रवहणं व्रजति मध्येन राजमार्गस्य। एतं तावद्विचारय, कस्य, कुत्र प्रेषितं प्रवहणं।

(४) अरे, प्रवहणवाहक, मा तावदेतं प्रवहणं वाहय। कस्य कृतमेतत् प्रवहणं? कोवा इहारूढः? कुत्र वा व्रजति।

चेटः। एशे खु पवहणे अज्जचारुदत्ताहकेलके; इध अज्जआ वसंतषेणा आरूढा; पच्छाणं पुण्फकरंडअं जिणुज्जाणं कीलिदुं चालुदत्तश्श णिज्जदि (१)।

वीरकः ॥ चंदनकमुपसृत्य ॥ एसो पवहणवाहओ भणादि; अज्जचालुदत्तस्स पवहणं, वसंतसेणा आरूढा, पुण्फकरंडअं जिसुज्जाणं णीअदित्ति (२)।

चंद। ता गच्छदु (३)।

वीरकः। अणवलोइदो जेव्व? (४)

चंद। अधइं (५)।

वीरकः। कस्स पच्चएण? (६)

चंद। अज्जचारुदत्तस्स (७)।

---

(१) एतत् खलु प्रवहणं आर्य्यचारुदत्तस्य क्षतं, इहार्य्या वसन्तसेना आरूढा; प्रस्थानं पुष्पकरण्डकं जीर्णोद्यानं क्रीडितुं चारुदत्तस्य निर्य्याति।

(२) एष प्रवहणवाहकोभणति; आर्य्यचारुदत्तस्य प्रवहणं, वसन्तसेनारूढा, पुष्पकरण्डकजीर्णोद्यानं नीयते इति।

(३) तद्गच्छतु।

(४) अनवलोकितएव?

(५) अथकिं।

(६) कस्य प्रत्ययेन?

(७) आर्य्य चारुदत्तस्य।

वीरकः। को अज्जचारुदत्तो? का वा वसंतसेणा? जेण अणवलोइदं वच्चदि (१)।

चंद। अरे, अज्जचारुदत्तं ण आणासि? णवा वसंतसेणिअं? जइ अज्जचारुदत्तं, वसंतसेणिअं वा, ण आणासि, ता गअणे जोण्हासहिदं चंदं पि तुमं ण आणासि।

को तं गुणारविंदं सीलमिअंकं जणो ण आणादि,
आवण्णदुक्खमोक्खं, चउःसाअरसारअं रअणं।
दोजेव्व पूअणीआ इह णअरीए तिलअभूदाअ,
अज्जा वसंतसेणा, धम्मणिही चारुदत्तोअ (२)।

वीरकः। अरे, चंदनआ;

(१) क आर्य्यचारुदत्तः? का वा वसन्तसेना? येनानवलोकितं व्रजति।

(२) अरे, आर्य्यचारुदत्तं न जानासि? नवा वसन्तसेनां? यदि आर्य्यचारुदत्तं, वसन्तसेनां वा, न जानासि, तदा गगने ज्योत्स्नासहितं चन्द्रमपि त्वं न जानासि।

कस्तं गुणारविन्दं शीलमृगाङ्कं जनोन जानाति,
आपन्नदुःखमोचं, चतुःसागरसारं रत्नं।
द्वावेव पूजनीयौ, इह नगर्य्यां तिलकभूतौ च,
आर्य्या वसन्तसेना, धर्म्मनिधिश्चारुदत्तश्च।

जाणामि चारुदत्तं, वसंतसेणं च सुठ्ठु जाणामि,
पत्ते अ लाअकज्जे, पिअरंपि अहं ण जाणामि (१)।

आर्य्यकः ॥ स्वगतं ॥ अयं मे पूर्व्ववैरी, अयं मे पूर्व्वबन्धुः। यतः।

एककार्य्यनियोगेऽपि नानयोस्तुल्यशीलता,
विवाहे च चितायाञ्च यथा हुतभुजोर्द्वयोः।

चंद। तुमं तन्तिलो सेणावई रखापच्चइदो; एदे धारिदा मए वइल्ला, अवलोएहि (२)।

वीरकः। तुमं पि रखापच्चइदा बलवई; ता तुमं जेव्व अवलोएहि (३)।

चंद। मए अवलोइदं, तुए अवलोइदं भोदि (४)।

वीरकः। जं तुए अवलोइदं, तं रखा पालएण अवलोइदं (५)।

---

(१) जानामि चारुदत्तं, वसन्तसेनाञ्च सुष्ठु जानामि,
प्राप्ते च राजकार्य्ये, पितरमपि अहं न जानामि।

(२) त्वं चिन्तापरः सेनापतीराज्ञः प्रत्ययितः; एतौ धारितौ मया बलीवर्द्दौ, अवलोकय।

(३) त्वमपि राज्ञः प्रत्ययितोबलपतिः; तस्मात्त्वमपि अवलोकय।

(४) मयावलोकितं, त्वयावलोकितं भवति।

(५) यत्त्वयावलोकितं, तत् राज्ञा पालकेनावलोकितं।

चंद। अरे, उणामेहि धुरं (१)।

चेट: ॥ तथा करोति ॥

आर्य्यक: ॥ स्वगतं ॥ अपि रक्षिणोमामवलोकयन्ति। अश्रस्त्रस्यास्मि मन्दभाग्य:। अथवा।

भीमस्यानुकरिष्यामि, बाहुः शस्त्रम्भविष्यति;
वरंव्यायच्छतोमृत्युर्न गृहीतस्य बन्धने। ९०

अथवा। साहसस्य तावदनवसरः।

चंद ॥ नाट्येन प्रवहणमारुह्यावलोकयति ॥

आर्य्यकः। शरणागतोऽस्मि।

चंद ॥ संस्कृतमाश्रित्य ॥ अभयं शरणागतस्य।

आर्य्यकः।

त्यजति किल तं जयश्रीर्जहति च मित्राणि बन्धुवर्गश्च,
भवति च सदोपहास्यो, यः खलु शरणागतं त्यजति। ९१

चंद। कधं? अज्जओगोवालदारओ, सेणवित्तासिदो विअ पत्तरहो, साउणिअस्स हत्थे णिवडिदो ॥ विचिन्त्य ॥ एसो अणवराधो सरणाअदो; अज्जचारुदत्तस्स पवहणं आरूढो; पाणप्पदस्स मे अज्जसव्विलअस्स मित्तं; अण्णदो, राअणिओओ। ता किं दाणिं एत्थ जुत्तमणुचिट्ठिदुं। अधवा, जं भोदु, तं भोदु, पढमं जेव्व अभअं दिण्णं (२)

(१) अरे, उन्नामय धुरं।

(२) कथं आर्य्यकोगोपालदारकः, श्येनवित्रासितइव

भीदाभअप्पदाणं दत्तस्स परोवआररसिअस्स,

जइ होइ, होउ णासो, तहविक्खु लोए गुणोजेव्व ।।१८

॥ सभयमवतीर्य्य ॥ दिट्ठा अज्जो ॥ इत्यर्द्धोक्तेन ॥ अज्जआ वसन्तसेणा। तदो एसा भणादि; जुत्तं णेदं, सरिसं णेदं, जं अहं अज्ज चारुदत्तं अहिसारिदुं गच्छंतो, राअमग्गे परिभूदा (१)।

वीरकः। चंदनआ, एत्थ मह संसओ समुप्पणो (२)।

चंद। कधं दे संसओ? (३)

पक्षी, शाकुनिकस्य हस्ते निपतितः। एष अनपराधः शरणागतः; आर्य्यचारुदत्तस्य प्रवहणं आरूढः; प्राणप्रदस्य मे आर्य्य शर्व्विलकस्य मित्रं; अन्यतो, राजनियोगः। तत्किमिदानीमत्र युक्तमनुष्ठातुं। अथवा, यद्भवतु तद्भवतु, प्रथममेवाभयं दत्तं।

(१) भीताभयप्रदानं ददतः परोपकाररसिकस्य,

यदि भवति, भवतु नाशस्तथापि खलु लोके गुणएव।

दृष्टआर्य्यः, आर्य्या वसन्तसेना। तत् एषा भणति; युक्तं नेदं, सदृशं नेदं, यदहं आर्य्यचारुदत्तं अभिसर्त्तुं गच्छन्ती, राजमार्गे परिभूता।

(२) चन्दनक, अत्र महान् संशयः समुत्पन्नः।

(३) कथं ते संशयः?

वीरकः। संभमघग्धरकंठो तुमं जादोसि जं तुए भणिदं,

दिट्ठो मए अज्जो; पुणो अज्जआ वसंतसेणे त्ति।

एत्थ मे अप्पच्चओ (१)।

चंद। अरे, को अप्पच्चओ तुह? वअं दक्खिणत्ता अव्वत्त भासिणो, खस, खत्तिक्कडो, क्कडट्ठो, ऽविलअ, कर्णाट, कर्ण, प्रावरण, अंद्रविड, चोल, वीण, बर्ब्बर, खेरखान, मुख, मधुघानप्रभृतीनां, म्लेच्छजातीनां, अनेकदेशभाषाभिज्ञा, यथेष्टं मंत्रयामो, दिट्ठा दिट्ठो वा, अज्जोवा अज्जआ वा, किं शब्द विचारः स्त्रीपुन्नपुंसकव्याख्यानमप्रस्तुतं (२)।

वीरकः। णं अहंपि पलोएमि; राअअणा एसा; अह रणोपच्चइदो (३)।

---

(१) संभ्रमघर्घरकण्ठस्त्वं जातोऽसि यत्त्वया भणितं,

दृष्टोमया खलु आर्य्यः; पुनरार्य्या वसन्तसेनेति।

अत्र मे अप्रत्ययः।

(२) अरे कः अप्रत्ययस्तव? वयं दाक्षिणात्या अव्यक्त भाषिणः, खसेत्यादीनि कुलदेशोपक्षितानि म्लेच्छजातिनामानीति बोध्यं। मंत्रयामोभाषामहे दृष्टो दृष्टा वा, आर्य्योवा आर्य्या वा।

(३) ननु अहमपि प्रलोकयामि; राजाज्ञा एषा; अहं राज्ञः प्रत्ययितः।

चंद। ता किं अहं अप्पच्चओ संवुत्तः (१)।

वीरकः। णं सामिणिओओ (२)।

चंद ॥स्वगतं॥ अज्जगोवालदारओ अज्जचारुदत्तस्स पवहणमहिरुहिअ अवक्कमदित्ति, जइ कहिज्जदि, तदो अज्ज चारुदत्तो रण्णा सासिज्जइ; ता कोएत्थ उआओ ॥विचिन्त्य॥ कर्णाटकलहप्पओअं कलेमि ॥प्रकाशं॥ अरे, वीरअ, मए चंदणकेण पलोइदं, पुणोवि तुमं पलोएसि; कोतुमं? (३)

वीरकः। अरे, तुमंपि को? (४)

चंद। पूइज्जंतो, माणिज्जंतो तुमं अप्पणो जादिं अणुसुरेसि (५)।

वीरकः ॥सक्रोधं॥ अरे, का मह जादी? (६)

(१) तत्किमहमप्रत्ययितः सम्वृत्तः।

(२) ननु स्वामिनियोगः।

(३) आर्य्य गोपालदारकआर्य्यचारुदत्तस्य प्रवहण मधिरुह्य अपक्रामतीति, यदि कथ्यते, तदा आर्य्यचारुदत्तो राज्ञा शास्यते, तत्कोऽत्र उपायः। कर्णाटकलहप्रयोगं करोमि। अरे, वीरक, मया चन्दनकेन प्रलोकितं, पुनरपि त्वं प्रलोकयसि, कस्त्वं?

(४) अरे त्वमपि कः?

(५) पूज्यमानोमान्यमानस्त्वमात्मनोजातिं अनुस्मरसि।

(६) अरे, का मम जातिः?

चंद। को भणउ (१)।

वीरकः। भणउ; अहवा ण भणउ! (२)

जाणंतावि हि जादिं तुज्झ ण भणामि सीलविहवेण,

चिट्ठउ मह च्चिअ मणे, किं च कइत्थेण भग्गेण (३)।

वीरकः। णं, भणउ, भणउ (४)।

चंद ॥ संज्ञां ददाति ॥

वीरकः। अरे, किं णेदं (५)।

चंद। सिण्णसिलाअलहत्थो, पुरिसाणं कुच्चगंठिसंठावणो,

कत्तरिवावुडहत्थो, तुमं पि सेणावई जादो (६)।

वीरकः। अरे चंदनआ, तुमंपि माणिज्जंतो, अप्पणोकरिकं जादिं ण सुमरेसि (७)।

(१) कोभणतु।

(२) भणतु; अथवा न भणतु।

(३) जानन्नपि खलु जातिं तव भणामि शीलविभवेन,

तिष्ठतु ममैव मनसि, किञ्च कपित्थेन भग्नेन।

(४) ननु, भणतु, भणतु।

(५) किं नेदं।

(६) शीर्णश्टगालकहस्तः, पुरुषाणां कुर्च्चग्रन्थिसंस्थापनः,

कर्त्तरीव्यापृतहस्तस्त्वमपि सेनापतिर्जातः।

(७) अरे चन्दनक, त्वमपि मान्यमान, आत्मनः कृतां जातिं न स्मरसि।

चंद। अरे, का मह चंदणअस्स चंदविसुद्धस्स जादी? (१)

वीरकः। को भणउ (२)।

चंद। भणउ, भणउ (३)।

वीरकः ॥ नाट्येन संज्ञां ददाति ॥

चंद। अरे, किं णेदं (४)।

वीरकः। अरे, सुणाहि (५)।

जादी तुज्झ विसुद्धा, मादा भेरी, पिदावि ते पडहो,
दुस्मुह करअभादा, तुमं पि सेणावइ जादो (६)।

चंद ॥ सक्रोधं॥ अहं चंदणओ चुम्मारओ! ता पलोएहि पवहणं (७)।

वीरकः। अरे, पवहणवाहआ, पडिवत्तावेहि, पवहणं पलोइस्सं (८)।

चेटः ॥ तथा करोति ॥

(१) अरे, का मम चन्दनकस्य चन्द्रविशुद्धस्य जातिः?

(२) को भणतु।

(३) भणतु, भणतु।

(४) अरे, किं नेदं।

(५) अरे, शृणु।

(६) जातिस्तव विशुद्धा, माता भेरी, पितापि ते पटहः,
दुर्मुख करटकभ्राता, त्वम पि सेनापतिर्जातः।

(७) अहं चन्दनकश्चर्मकारः! तदा प्रलोकय प्रवहणं।

(८) अरे प्रवहणवाहक, परिवर्त्तय प्रवहणं प्रलोकयिष्यामि।

॥ वीरकः नाट्येन प्रवहणमारोढुमिच्छति चंदनकः सहासं केशेषु गृहीत्वा पातयति, पादेन ताडयति ॥

वीरकः ॥ सक्रोधमुत्थाय ॥ अरे, अहं तुए वीसद्धे, राआणत्तिं करेन्तो, सहसा केसेसु गेह्णिअ पादेन ताडिदो। ता सुणु, रे; अहिअरणमज्झे जदि दे चउरंगं ण कप्पावेमि, तदो ण होमि वीरओ (१)।

चंद। अरे राअउलं, अहिअरणं वा, वच्च; किं तए सुणअ सरिसेण (२)।

वीरकः ॥ तथेति निष्क्रान्तः ॥

चंद ॥ दिशोऽवलोक्य ॥ गच्छ, रे पवहणवाहआ, गच्छ। जइ कोवि पुच्छदि तदो भणेसि, चंदनअवीरएहिं अवलोइदं पवहणं वच्चदि। अज्जे वसन्तसेणे, इमं च अहिण्णाणं दे देमि (३)।

---

(१) अरे, अहं त्वया विश्रब्धो, राजाज्ञप्तिं कुर्वन्, सहसा केशेषु गृहीत्वा पादेन ताडितः। तत् शृणु, रे; अधिकरण मध्ये यदि ते चतुरङ्गं न कर्तयामि, तदा न भवामि वीरकः।

(२) अरे राजकुलं, अधिकरणं वा व्रज; किं त्वया शुनकसदृशेन।

(३) गच्छ, रे प्रवहणवाहक, गच्छ। यदि कोऽपि पृच्छति तदा भण, चन्दनकवीरकाभ्यामवलोकितं प्रवहणं व्रजति। आर्य्ये वसन्तसेने, इदञ्चाभिज्ञानं ते ददामि।

॥ इति खड्गं प्रयच्छति ॥

आर्य्यकः ॥ खड्गं गृहीत्वा सहर्षमात्मगतं ॥

अये शस्त्रं मया प्राप्तं, स्पन्दते दक्षिणोभुजः,

अनुकूलञ्च सकलं, हन्त संरक्षितोऽप्यहं । १७)

चंद । अज्जए ।

एत्थ मए विस्सादा, पडिद्धाविदा, चंदणअंपि सुमरेसि,

णं भणामि, एष लुद्धो णेहस्स रसेण वो सामो (१)।

आर्य्यकः ।

चन्दनश्चन्द्रशीलाढ्यो, दैवादद्य सुहृन्मम,

चन्दनं भो स्मरिष्यामि, सिद्धादेशस्तथा यदि । १८)

चंद । अभअं तुह देउ हरोविन्हु वह्मा रवीअ चंदोअ ।

हन्तूण सत्तुवक्खं सुम्भणिसुम्भे जधा देवी (२)।

चेटः ॥ प्रवहणेन निष्क्रान्तः ॥

(१) आर्य्य।

अत्र मया विज्ञप्ता प्रत्ययिता, चन्दनकमपि स्मरसि;

ननु भणामि, एष लुब्धः, स्नेहस्य रसेन सुवदामः।

(२) अभयं तव ददातु हरोविष्णुर्ब्रह्मा रविश्च चन्द्रश्च,

हत्वा शत्रुपक्षं शुम्भनिशुम्भौ यथा देवी।

चंद ॥ नेपथ्याभिमुखमवलोक्य ॥ अरे, णिक्कमंतस्स पिअवअस्सो मे सव्विलओ पुट्ठिदो ज्जेव्व अणुलग्गो गदो। भोदु, पधाणदंडधारओ, वीरओ, राअपच्चअआरो विरोधिदो; ता जाव अहंपि पुत्तभादुपडिवुदो एदं जेव्व अणुगच्छामि (१)।

॥ इति निष्क्रान्ताः सर्व्वे ॥

प्रवहणविपर्य्ययोनाम षष्ठोऽङ्कः।

---

(१) अरे, निष्क्रामतोमम प्रियवयस्यः, शर्व्विलकः पृष्ठतएवानुलग्नोगतः। भवतु, प्रधानदण्डधारको, वीरको, राजप्रत्ययकारकोविरोधितः; तत् यावदहमपि पुत्त्रभ्रातृपरिवृतएतमेवानुगच्छामि।

# अथ सप्तमाङ्कः।

---

ततः प्रविशति चारुदत्तोविदूषकश्च।

विदू। भो, पेक्ख, पेक्ख, पुप्फकरण्डअजिण्णुज्जाणस्स सस्सिरीअदां (१)।

चारु। वयस्य, एवमेतत्; तथाहि;

वणिजइव भान्ति तरवः, पण्यानीव स्थितानि कुसुमानि,
शुल्कमिव साधयन्तोमधुकरपुरुषाः प्रविचरन्ति। ?

विदू। भो, इमं असक्कारमणीयं सिलाअलं उवविसदु भवं (२)।

चारु ॥ उपविश्य॥ वयस्य, चिरयति वर्द्धमानकः।

विदू। भणिदो मए, वड्ढमाणओ, वसन्तसेणिअं गेण्हिअ, लहुं लहुं आअच्छत्ति (३)।

चारु। भणितस्तत्किं चिरयति।

---

(१) भोः, पश्य, पश्य, पुष्पकरण्डकजीर्णोद्यानस्य सश्रीकतां।

(२) भोः, इदमसंस्काररमणीयं; शिलातलमुपविशतु भवान्।

(३) भणितोमया, वर्द्धमानकः, वसन्तसेनां गृहीत्वा, लघु लघु आगच्छेति।

किं यात्यस्य पुरः, शनैः प्रवहणं तस्यान्तरं मार्गते,
भग्नेऽचे परिवर्त्तनं प्रकुरुते, छिन्नोऽथ वा प्रग्रहः,
कर्म्मान्तोज्झितदारुवारितगतिर्मार्गान्तरं याचते,
स्वैरं प्रेरितगोयुगः, किमथवा स्वच्छन्दमागच्छति।

॥ प्रविश्य गुप्तार्यकप्रवहणस्थः चेटः ॥

चेटः। जाध, गोणा, जाध (१)।

आर्य्यकः ॥ स्वगतं ॥

नरपतिपुरुषाणान्दर्शनाद्भीतभीतः,
सनिगडचरणत्वात्सावशेषापसारः;
अविदितमधिरूढोयामि, साधो सुयाने,
परभृतइव नीडे रचितोवायसीभिः।

अहो, नगरात्सुदूरमपक्रान्तोऽस्मि; तत्किमस्मात् प्रवहणादवतीर्य्य वृक्षवाटिकागहनं प्रविशामि। उताहो, प्रवहणस्वामिनं पश्यामि। अथवा, कृतं वृक्षवाटिकाग्रहणेन, अभ्युपपन्नवत्सलः खलु तत्र भवानार्य्यचारुदत्तः श्रूयतां, तत्प्रत्यक्षीकृत्य गच्छामि।

एतावदस्माद्व्यसनार्णवोत्थितं निरीक्ष्य साधुः समुपैति निर्वृतिं,
शरीरमेतद्गतमीदृशीन्दशां धृतं मया तस्य महात्मनो गुणैः।

चेटः। इमं तं उज्जाणं, जाव उपसप्पामि ॥ उपसृत्य ॥ अज्जमित्तेअ (२)।

---

(१) यात, गोणा, यात।

(२) इदं तदुद्यानं यावदुपसर्पामि आर्य्यमैत्रेय।

विदू। भो, पिअं दे णिवेदेमि; वड्ढमाणओ मंतेदि, आगदाए वसंतसेणाए होदव्वं (१)।

चारु। प्रियन्नः प्रियन्नः।

विदू। दासीपुत्ता, किं चिरदूदोसि (२)।

चेटः। अज्ज मित्तेअ, मा कुप्प, जाणत्थलके विसुमरिदेत्ति कदुअ, गदागदिं कलेन्ते चिलदूदेम्हि (३)।

चारु। वर्द्धमानक, परिवर्त्तय प्रवहणं। सखे मैत्रेय, अवतारय वसन्तसेनां।

विदू। किं णिअलेण से बद्धा गोडा, जेण सअं णोदलदि ॥ उत्थाय प्रवहणमुद्घाट्य॥ भो, ण वसन्तसेणा, वसंतसेणो क्खु एसो (४)।

चारु। वयस्य, अलं परिहासेन; न कालमपेक्षते स्नेहः। अथ वा स्वयमेवावतारयामि ॥ इत्युत्तिष्ठति ॥

आर्य्यकः ॥ दृष्ट्वा॥ अये, अयमेव प्रवहणस्वामी, न केवलं श्रुतिरमणीयो, दृष्टिरमणीयोऽपि; हन्त, रक्षितोऽस्मि।

---

(१) प्रियं ते निवेदयामि; वर्द्धमानको मन्त्रयति, आगतया वसन्तसेनया भवितव्यं।

(२) दासीपुत्र, किं चिरायितोऽसि।

(३) आर्य्य मैत्रेय, मा कुप्य, यानास्तरणं विस्मृतमिति कृत्वा, गतागतं कुर्व्वन् चिरायितोऽस्मि।

(४) किं निगडेनास्याः पादौ बद्धौ, येन स्वयं नावतरति। न वसन्तसेना, वसन्तसेनः खल्वेषः।

चारु ॥ प्रवहणमधिरुह्य दृष्ट्वा च॥ अये तत्कोऽयं?
करिकरसमबाहुः, सिंहपीनोन्नतांसः,
पृथुतरसमवक्षास्ताम्रलोलायताक्षः,
कथमिदमसमानं प्राप्त एवंविधो यो
वहति निगडयुग्मं, पादलग्नं महात्मा । |८|

ततः को भवान्?

आर्य्यकः। शरणागतो गोपालप्रकृतिरार्य्यकोऽस्मि।

चारु। किं, घोषादानीय योऽसौ राज्ञा पालकेन बद्धः।

आर्य्यकः। अथ किं।

चारु। विधिनैवोपनीतस्त्वं चक्षुर्विषयमागतः;
अपि प्राणानहं जह्यां, न तु त्वां शरणागतं। |९|

आर्य्यकः ॥ हर्षं नाटयति ॥

चारु। वर्द्धमानक, चरणान्निगलमपनय।

चेटः। जं अज्जो आणवेदि ॥ तथा कृत्वा॥ अज्ज अवणीदाणि णिअलाणि (१)।

आर्य्यकः। स्नेहमयान्यन्यानि दृढतराणि रत्नानि।

विटू। सङ्गच्छन्तु णिअलाइं एसोवि मुक्को; सम्पदं अम्हे वज्जिस्सामो (२)।

---

(१) यदार्य्य आज्ञापयति। आर्य्य अपनीतानि निगडानि।

(२) संगच्छन्तु निगडेषु एषोऽपि मुक्तः; साम्प्रतं वयं व्रजिष्यामः।

चारु। धिक् ग्राम्यं।

आर्य्यकः। सखे, चारुदत्त, अहमपि प्रणयेनेदं प्रवहण माऊढः, तत् चन्तव्यं।

चारु। अलं; चान्तोऽस्मि स्वयंग्राहप्रणयेन भवता।

आर्य्यकः। अभ्यनुज्ञातोभवता गन्तुमिच्छामि।

चारु। गम्यतां।

आर्य्यकः। भवत्यवतरामि।

चारु। सखे, नावतर्त्तव्यं। प्रत्ययापनीतसंयमनस्य भवतो अलघुसंचारा गतिः। सुलभपुरुषसञ्चारेऽस्मिन्प्रदेशे प्रवहणं विश्वासमुत्पादयति; तत्प्रवहणेनैव गम्यतां।

आर्य्यकः। यथाह भवान्।

चारु। चेमेण व्रज बान्धवान्।

आर्य्यकः। ननु मया लब्धोभवान् बान्धवः।

चारु। स्मर्त्तव्योऽस्मि कथान्तरेषु भवता।

आर्य्यकः। स्वात्मापि विस्मर्य्यते।

चारु। त्वां रचन्तु पथि प्रयान्तममराः

आर्य्यकः। संरचितोऽहं त्वया।

चारु। स्वैर्भाग्यैः परिरचितोऽसि।

आर्य्यकः। ननु हे तत्रापि हेतुर्भवान्।

चारु। यतोद्यते पालके महती रचा वर्त्तते, तत् शीघ्र मवक्रामतु भवान्।

आर्य्यकः। एवं पुनर्दर्शनाय ॥ निष्क्रान्तः ॥

चारु। कृत्वैवं मनुजपतेर्महद्व्यलीकं,
स्थातुं हि क्षणमपि न प्रशस्तमस्मिन्।
मैत्रेय, क्षिप निगडं पुराणकूपे;
पश्येयुः क्षितिपतयो हि चारदृष्ट्या।

॥ वामाक्षिस्पन्दनं सूचयित्वा ॥ सखे, मैत्रेय, वसन्तसेना दर्शनोत्सुकोऽयं जनः ॥ पश्य ॥

अपश्यतोऽद्य तां कांतां वामं स्फुरति लोचनं,
अकारणपरित्रस्तं हृदयं व्यथते मम।

तदेहि, गच्छावः ॥ परिक्रम्य ॥ कथमभिमुखमनाभ्युदयिकं श्रमणकदर्शनं ॥ विचार्य्य ॥ प्रविशत्वयमनेन पथा, वयमप्यनेनैव पथा गच्छामः ॥ इति निष्क्रान्ताः सर्व्वे ॥

आर्य्यकापहरणं नाम सप्तमोऽङ्कः।

## अथाष्टमाङ्कः।

ततः प्रविशत्यार्द्रचीवरहस्तोभिक्षुः।

भिक्षुः। अज्ञाः!

कलेध धम्मसंचयं, जग्गेध ज्झाणपडहेण,

विसमा इंदिअचोला हलंति चिलसंचिदं धम्मं।

अविअ।

पञ्चज्जण जेण मालिदा, इत्थिअ मालिअ, गाम लक्खिदे,

अवलेअ चंडाल मालिदे, अवशं शे शग्ग गाहदि।

शिलमुण्डअ, मुण्ड मुण्डिदे, चित्तू ण मुण्डिदे, कीश मुंडिदे,

जाह पुण अ चित्त मुण्डिदे, शाऊ सुट्ठु शिल ताह मुण्डिदे (१)

---

(१) हे अज्ञाः।

कुरुध्वं धर्म्मसञ्चयं, नित्यं जागृत ध्यानपटहेन,

विषमादिन्द्रियचौरा हरन्ति चिरसञ्चितं धर्म्मं।

पञ्चेन्द्रियाणियेनमारितानि, अविद्यास्त्रमारयित्वा, गात्त्रं रक्षितं,

अवलस्याहङ्कारोमारितो, ऽवश्यं स पुनः स्वर्गं गाहते।

हे शिरोमुण्डक, मुण्डं मुण्डितं, चित्तं न मुण्डितं, किं,मुण्डितं।

यस्य पुनस्च चित्तं मुण्डितं, साधुः शुद्धः तस्य शिरोमुण्डितं।

गिह्विदं कशाओदके एश चीवले, जाव एदं लहिअ, शालकाहकेलके उज्जाणे पविशिअ, पोक्खलिणीए पक्खालिअ, लहुं लहुं अवक्कमिश्शं (१)।

॥ परिक्रम्य तथा करोति। नेपथ्ये ॥ चिठ्ठ, अरे दुठ्ठशमणक, चिठ्ठ (२)।

भिक्षुः ॥ दृष्ट्वा सभयं॥ ही अविदमाणहे! एशे शे लाअशालशंठाणे आअदे; एकेण भिखुणा अवलाहे किदे, अण्णंपि जहिं जहिं भिखुं पेक्खदि, तहिं तहिं गोणठुणासं विन्धिअ ओवाहेदि। ता कहिं अशलणे शलणं गमिश्शं। अधवा, भट्टालके ज्जेव्व बुद्धे मे शलणे (३)

॥ प्रविश्य सखड्गेन विटेन सह शकारः ॥ चिठ्ठ, ले दुठ्ठ शमणक, चिठ्ठ! आवाणअमज्झपविठ्ठस्स विअ लत्तमूलअश्श शीशं ते मोडइश्शं (४) ॥ इति ताडयति ॥

---

(१) गृहीतं कशायमिदं चीवरं, यावदिदं गृहीत्वा, श्यालककृतेउद्याने प्रविश्य, पुष्करिण्यां प्रक्षाल्य, लघु लघु अवक्रमिष्यामि।

(२) तिष्ठ, रे दुष्टश्रमणक, तिष्ठ।

(३) भो आश्चर्य्यं! एषराजश्यालकसंस्थानकआगतः। एकेन भिक्षुणा अपराधे कृते, अन्यमपि यत्र यत्र भिक्षुं पश्यति, तत्र तत्र नासिकां विद्धा अपवाहयति; तस्मात्कुत्र अशरणः शरणं गमिष्यामि। अथवा भट्टारकएव बुद्धोमे शरणं।

(४) तिष्ठ, रे दुष्ट श्रमणक, तिष्ठ। आपानकमध्यप्रविष्टस्यापि रक्तमूलकस्य शीर्षं ते भंक्ष्यामि।

विटः। काणेलीमातः! न युक्तं निर्वेदधृतकषायं भिक्षुं ताडयितुं; तत्किमनेन। इदन्तावत्सुखोपगम्यमुद्यानं पश्यतु भवान्।

अशरणशरणप्रमोदभूतैर्वनतरुभिः क्रियमाणचारुकर्म्म, हृदयमिव दुरात्मनामगुप्तंनवमिव राज्यमनिर्जितोपभोग्यं। १३

भिक्षुः। साअदं, पसीददु उवासके(१)।

शकारः। भावे, पेक्ख, पेक्ख, आक्कोशदि मं (२)।

विटः। किं ब्रवीति।

शकारः। उवासकेत्ति मं भणादि। किं, हगे णाविन्दे? (३)

विटः। बुद्धोपासकइति भवन्तं स्तौति।

शकारः। सुणु, शमणका, सुणु (४)।

भिक्षुः। तुमं धणे, तुमं पुणे (५)

शकारः। भावे, धणे पुणेत्ति मं भणादि। किं, हगे शला वके, कोष्टके वा? (६)

---

(१) स्वागतं, प्रसीदतु उपासक।

(२) विद्वन्, पश्य, पश्य, आक्रोशति मां।

(३) उपासक, इति मां भणति; किमहं नापितः?

(४) शृणु श्रमणक।

(५) त्वं धन्यस्त्वं पुण्यः।

(६) धन्यः पुण्यइति मां भणति; किमहं श्रावको, कोष्ठकोवा?

विटः। काणेलीमातः! ननु धन्यस्त्वं, पुण्यस्त्वं, इति भवन्तं स्तौति।

शकारः। भावे, ता कीश एशे इध आगदे? (१)

भिक्षुः। इदं चीवलअं पक्खालिदुं (२)।

शकारः। अले दुट्ठशमणक; एशे मम बहिणीवदिणा शव्वुज्जाणाणं पवले पुप्फकलंडुज्जाणे दिण्णे; जहिं दाव शुण हका शिआला पाणिअं पिअन्ति; हगेवि पवलपुलिशे मणुश्शके ण ण्हाआमि। तहिं तुमं पुक्खलणीए पुलाणकुलुत्थजूश शवण्णाइं उग्गशगन्धिआइं चीवलाइं पक्खालेशि। ता तुमं एक्कपहालिअं कलेमि (३)।

विटः। काणेलीमातः! तथा तर्कयामि यथानेन चिर प्रव्रजितेन भवितव्यं।

शकारः। कथं, भावे जाणादि (४)।

---

(१) तस्मात् कथमेष इहागतः।

(२) इदं चीवरकं प्रक्षालितुं।

(३) अरे, दुष्ट श्रमणक, एतन्मम भगिनीपतिना सर्व्वोद्यानानां प्रवरं पुष्पकरण्डोद्यानं दत्तं; यत्र तावत् शुनकाः शृगालाः पानीयं पिबन्ति; अहमपि प्रवरपुरुषो मनुष्यकः न स्नामि। तत्र त्वं पुष्करिण्यां पुराणकुलित्थयूषसवर्णानि उग्रगन्धीनि चीवराणि प्रक्षालयसि। तत् त्वामेकप्रहारिकं करोमि।

(४) कथं विद्वान् जानाति।

विटः। किमत्र ज्ञेयं; पश्य;

अद्यार्थस्य तथैव केशविरहाद्गौरी ललाटच्छविः;
कालस्याल्पतया च चीवरकृतः स्कन्धे न जातः किणः;
नाभ्यस्ता च कषायवस्त्ररचना दूरं निगूढान्तरं,
वस्त्रान्तश्च पटोच्छ्रयात्प्रशिथिलं स्कन्धे न सन्तिष्ठते॥(८)

भिक्षुः। उवाशके, एव्वं अचिलप्पव्वजिदे हगे(१)।

शकारः। ता कीश तुमं जातमेत्तकं जेव्व, ण पव्वजिदे (२)॥ इति ताडयति॥

भिक्षुः। णमो बुद्धश्श (३)।

विटः। किमनेन ताडितेन तपस्विना? मुच्यतां; गच्छतु।

शकारः। अले, चिट्ठ दाव, जाव शम्पधालेमि (४)।

विटः। केन सार्द्धं।

शकारः। अत्तणो हडक्केण (५)।

विटः। हन्त, न गतं।

शकारः। पुत्तका हलक्का, भट्टके पुत्तक, एशे शमणके अवि णाम किं गच्छदु, किं चिट्ठदु; खयं णावि गच्छदु, णावि

---

(१) उपासक, एवं अचिरप्रव्रजितोऽहं।

(२) किमर्थं त्वं जातमात्र एव न प्रव्रजितः।

(३) नमो बुद्धस्य।

(४) अरे तिष्ठ तावत्, यावत् संप्रधारयामि।

(५) आत्मनो हृदयेन।

चिट्ठदु । भावे, संपधालिदं मए हडक्केण सह; एसे मह हडक्के भणादि (१)।

विटः। किं ब्रवीति?

शकारः। मावि गच्छदु, मावि चिट्ठदु; मावि उशशदु, मावि णीशशदु; इधज्जेव्व झत्ति त्र पडित्र मलेदु (२)।

भिक्षुः। णमो बुद्धस्स, शलणागदेह्मि (३)।

विटः। गच्छतु।

शकारः। णं शमएण (४)।

विट। कीदृशः समयः।

शकारः। तधा कद्दमं फेलदु, जधा पाणित्रं पंकाइलं ण होदि। अधवा, पाणित्रं पुञ्जीकदुत्र कद्दमं फेलदु (५)।

---

(१) पुत्रक हृदय, भट्टारक पुत्रक, एष श्रमणकः अपि नाम किं गच्छतु, किं तिष्ठतु, स्वयं नापि गच्छतु, नापि तिष्ठतु। संप्रधारितं मया हृदयेन सह; एतन्मम हृदयं भणति।

(२) मापि गच्छतु, मापि तिष्ठतु; मापि उच्छ्वसितु, मा अपि निःश्वसितु; इहैव झटिति पतित्वा म्रियतां।

(३) नमोबुद्धस्य, शरणागतोऽस्मि।

(४) ननु समयेन।

(५) तथा कर्दमं क्षिपतु, यथा पानीयं पङ्काविलं न भवति। अथवा, पानीयं पुञ्जीकृत्य कर्दमं क्षिपतु।

विटः। अहो मूर्खता।

विपर्य्यस्तमनश्चेष्टैः शिलाशकलवर्ष्मभिः,
मांसवृक्षैरियं मूर्खैर्भाराक्रान्ता वसुन्धरा। ।५।

भिक्षुः ॥ नाट्येनाक्रोशति ॥

शकारः। किं भणादि? (१)

विटः। स्तौति भवन्तं।

शकारः। शुणु, शुणु, पुणोवि शुणु (२)।

॥ तथा कृत्वा निष्क्रान्तोभिक्षुः ॥

विटः। काणेलीमातः! पश्योद्यानस्य शोभां।

अमी हि वृक्षा फलपुष्पशोभिताः,कठोरनिष्पन्दलतोपवेष्टिताः,
नृपाज्ञया रक्षिजनेन पालितानराः सदाराइव यान्ति निर्वृतिं।

शकारः। शुट्ठु भावे भणादि (३)।

वणकुशुमविचित्तिदा अ भूमी,
कुशुमभलेण विणामिदाअ लुक्खा;
दुमशिहललदा अ लम्बमाणा,
पणशफलाइव वाणलालजन्ति।

---

(१) किं भणति।

(२) शृणु, शृणु, पुनरपि शृणु।

(३) सुष्ठु भावोभणति।

वनकुसुमविचिचिताच भूमी, कुसुमभरेण विनामितास्च वृक्षाः;
द्रुमशिखरलताश्च लम्बमाना, पनसफलानीव वानरा लजन्ति।

विटः। काणेलीमातः। इदं शिलातलमध्यास्यतां।

शकारः। एशोम्हि आशिदे॥ इति विटेन सह उपविशति॥ भावे, अज्जवि तं वशंन्तशेणिअं शुमलामि; दुज्जणवअणं विअ हडक्कादो ण ओदलदि (१)।

विटः ॥ स्वगतं॥ तथा निरस्तोऽपि स्मरति तां।

अथवा। स्त्रीभिर्विमानितानां कापुरुषाणां विवर्द्धते मदनः,
सत्पुरुषस्य स एव नुभवतिमृदुर्नैव वा भवति।

शकारः। भावे, कावि वेला थावलकचेडश्श भणिदश्श, पवहणं गेह्णिअ, लडुं लडुं आगछेत्ति। अज्जवि णागछदित्ति, चिलम्हि वुभुक्खिदे; मज्झह्ने ण शक्कीअदि पादेहिं गन्तुं। ता पेक्ख, पेक्ख;

णहमज्झगडे शूले दुप्पेक्खे कुविदवाणलशलिक्खे,
भूमी हडशंतत्ता, हदपुत्तशदेव्व गन्धाली (२)।

---

(१) एषोऽस्मि आसितइति। भाव, अद्यापि तां वसन्तसेनां स्मरामि; दुर्जनवचनमिव हृदयान्नावतरति।

(२) भाव, कापि वेला स्थावरकचेटस्य भणितस्य, प्रवहणं गृहीत्वा, लघु लघु आगच्छेति। अद्यापि नागच्छतीति, चिरमस्मि बुभुक्षितः; मध्याह्ने न शक्यते पादाभ्यां गन्तुं। तत् पश्य, पश्य;

नभोमध्यगतः सूर्योदुष्प्रेक्ष्यः कुपितवानरसदृशः,
भूमी हतसंतप्ता, हतपुत्रशतेव गान्धारी।

विटः। एवमेतत्।

छायासु प्रतिमुक्तशष्पकवलं निद्रायते गोकुलं,
तृष्णार्त्तैश्च निपीयते वनमृगैरुष्णं पयः सारसं;
सन्तापादतिशङ्कितैर्न नगरीमार्गो नरैः सेव्यते,
तप्तां भूमिमपास्य च प्रवहणं मन्ये क्वचित्संस्थितं।

शकारः। भावे,

शिलशि मम णिलीणे, भाव, शुज्जश्श पादे,
शउणिखगविहङ्गा लुक्खशाखाशु लीणा;
णलपुलिशमणुश्शा उण्हदीहं शशन्ता,
घलशलणणिशण्णा आदवं णिव्वहन्ति।

भावे। अज्जवि श चेडे णागच्छदि। अत्तणो विणोदण णिमित्तं किं पि गाइश्शं ॥ इति गायति ॥ भावे, शुदं तुए जं मए गाइदं? (१)

विटः। किमुच्यते; गन्धर्व्वोभवान्।

---

(१) शिरसि मम निलीना, भाव, सूर्य्यस्य पादः;
शकुनिखगविहङ्गा वृक्षशाखासु लीनाः,
नरपुरुषमनुष्या दीर्घमुष्णं श्वसन्तो
गृहशरणनिषण्णा आतपं निर्व्वहन्ति।

भाव, अद्यापि स चेटः नागच्छति। आत्मनो विनोदन निमित्तं किमपि गास्यामि। भाव, श्रुतं त्वया यन्मया गीतं।

शकारः। कधं, गन्धव्वो ण भविश्शं?

हिंगुज्जला, जीलकभद्दमुत्थे, वचाहगण्ठी, शगुडा शुण्ठी,

एशे मए शेविद गन्धजुत्ती, कधं ण हग्गे मधुलश्शलत्ति?

भावे, पुणोवि दाव गाइश्शं ॥तथा करोति॥ भावे, भावे,

शुदं तुए जं मए गाइदं (१)।

विटः। किमुच्यते; गन्धर्वो भवान्।

शकारः। कधं गन्धव्वो ण भवामि।

हिङ्गुज्जले, दीणमलिच्चचुण्णे वग्घालिदे, तेलघिएहि मिश्शे,

भुत्ते मए, पालहुदीअमंशे; कधं ण हग्गे मधुलश्शलत्ति?

भावे, अज्जवि चेडे णागच्छदि (२)।

विटः। स्वस्थोभवतु भवान्; संप्रत्येवागमिष्यति।

॥ ततः प्रविशति प्रवहणाधिरूढा वसन्तसेना चेटश्च ॥

---

(१) कथं, गन्धर्वो न भविष्यामि?

हिङ्गूज्ज्वला, जीरकभद्रमुस्ता, वचायाग्रन्थिः, सगुडा शुण्ठी,

एषा मया सेविता गन्धयुक्ता, कथं नाहं मधुरस्वर, इति?

भाव, पुनरपि तावत् गास्यामि। भाव, भाव, श्रुतं त्वया

यन्मया गीतं।

(२) कथं गन्धर्व्वो न भवामि।

हिङ्गूज्ज्वलं, दत्तमरीचचूर्णं व्याघारितं, तैलघृतैः मिश्रं,

भुक्तं मया, भारभृतीयमांसं; कथं नाहं मधुस्वरइति?

भाव, अद्यापि चेटोनागच्छति।

चेट:। भीदे क्खु हग्गे, मज्झण्हिके शुय्ये; मा दाणिं कुविदे लाअशालशंठाणे हुविश्शदि। ता तुलिदं वहामि। जाध, गोणा, जाध (१)।

वसन्तसेना। हद्धी हद्धी! ण हु वड्ढमाणअस्स अअं सरसंजोओ; किण्णेदं? किं णहु अज्जचारुदत्तेण वाहणपरिस्समं परिहरन्तेण, अण्णो मणुस्सो, अण्णपवहणं, पेसिदं भविस्सदि? फुरदि दाहिणं लोअणं, वेवदि मे हिअअं, सुण्णाओ दिसाओ, सव्वं ज्जेव्व विसंठुलं पेक्खामि (२)।

शकारः ॥नेमिघोषमाकर्ण्य॥ भावे, आगच्छे पवहणे (३)।

विटः। कथं जानासि?

शकारः। किं ण पेक्खदि भावे? वुड्ढशुअले विअ घुलघुलाअमाणे लक्खीअदि (४)।

---

(१) भीत: खल्वहं, माध्याह्निकः सूर्य्यः; मा इदानीं कुपितः राजश्यालसंस्थानको भविष्यति। तत् त्वरितं वहामि। यात, वृषभा, यात।

(२) हा धिक्, हा धिक्; न खलु वर्द्धमानकस्यायं स्वरसंयोगः किंनेदं? किं न खलु आर्य्यचारुदत्तेन वाहनपरिश्रमं परिहरता, अन्यो मनुष्यः, अन्यत् प्रवहणं, प्रेषितं भविष्यति। स्फुरति दक्षिणं लोचनं, वेपते मे हृदयं; शून्या दिशः, सर्व्वमेव विसंष्ठुलं पश्यामि।

(३) आगतं प्रवहणं।

(४) किं न पश्यति भावः? वृद्धशूकर इव घुरघुरायमाणं लक्ष्यते।

विटः ॥ दृष्ट्वा ॥ साधु लक्षितं; अयमागतः।

शकारः। पुत्तका थावलक, चेडा, आगदेशि ? (१)

चेटः। अधइं? (२)

शकारः। पवहणेवि आगदे ? (३)

चेटः। अधइं? (४)

शकारः। गोणावि आगदे ? (५)

चेटः। अधइं? (६)

शकारः। तुमं पि आगदे? (७)

चेटः ॥ सहासं ॥ भट्टके, अहंवि आगदे (८)।

शकारः। ता पवेशहि पवहणं (९)।

चेटः। कदलेण मग्गेण (१०)।

---

(१) पुत्रक स्थावरक, चेट, आगतोऽसि ?

(२) अथकिं?

(३) प्रवहणमपि आगतं?

(४) अथ किं?

(५) वृषभौ अपि आगतौ?

(६) अथ किं?

(७) त्वमपि आगतः ?

(८) भट्टारक, अहमपि आगतः।

(९) तस्मात् प्रवेशय प्रवहणं।

(१०) कतरेण मार्गेण।

शकारः। एदेण जेव्व पगालखण्डेण(१)।

चेटः। भट्टके, गोणा मलेन्ति, पवहणेवि भज्जदि, अहगो वि चेडे मलामि (२)।

शकारः। अले, लाअशालके हग्गो, गोणा मले अवलं कीलिश्शं; पवहणे भग्गोऽवलं घडाइश्शं; तुमं मले अणे पवहणवाहके हुविश्शदि (३)।

चेटः। शव्वं उववण्णं हुविश्शदि; हग्गो अत्तणोकेण हुविश्शं(४)।

शकारः। अले, शव्वंवि णश्शदु, पगालखण्डेण पवेशेहि पवहणं(५)।

चेटः। विभज्ज ले पवहणा शमं शामिणा विभज्ज। अले

---

(१) एतेनैव प्राकारखण्डेन।

(२) भट्टारक, वृषभाम्रियन्ते, प्रवहणमपि भज्यते, अहमपि चेटोम्रिये।

(३) अरे, राजश्यालकोऽहं; वृषभा मृता अपरं क्रेष्यामि; प्रवहणं भग्नं अपरं कारयिष्यामि; त्वं मृतः अन्यः प्रवहणवाहकोभविष्यति।

(४) सर्व्वं उपपन्नं भविष्यति; अहमात्मनः कृते न भविष्यामि।

(५) अरे, सर्व्वमपि नश्यतु; प्राकारखण्डेन प्रवेशय प्रवहणं।

पवहणे भोदु, भट्टके गदुत्र णिवेदेमि ॥ प्रविश्य ॥ कधं ण भग्गे? भट्टके एशे उवत्थिदे पवहणे (१)।

शकारः। पुंश्चलिका गोणा ण मला, लज्जु तुमंपि ण मले? (२)

चेटः। अध किं? (३)

शकारः। भाव, आगच्छ; पवहणं पेक्खामो। भावे, तुमं पि मे गुलु, पलमगुलु, पेक्खोअदि आदलके अब्भन्तलकेत्ति, तुमं दाव पवहणं अग्गदो अहिलुह (४)।

विटः। एवं भवतु ॥ इत्यारोहति ॥

शकारः। अधवा चिट्ठ तुमं; तुह थक्केलके पवहणे जेण तुमं अग्गदो अहिलुहशि? हग्गे पवहणशामी अग्गदो पवहणं अहिलुहामि (५)।

---

(१) विभंज रे प्रवहणं समं स्वामिना विभंज। अन्यत् प्रवहणं भवतु, भट्टारकं गत्वा निवेदयामि। कथं न भग्नं? भट्टारक, एतदुपस्थितं प्रवहणं।

(२) ननु, पुंश्चलीज, वृषभान मृताः, त्वमपि न मृतः।

(३) अथ किं?

(४) भाव, आगच्छ, प्रवहणं पश्यामः। भाव, त्वमपि मे गुरुः, प्रथमगुरुः, प्रेक्ष्य आदरकः अभ्यन्तरकइति, त्वं तावत् प्रवहणमग्रतोऽधिरोह।

(५) अथवा तिष्ठ त्वं; तव प्रकृतं प्रवहणं येन त्वमग्रतो ऽधिरोहसि? अहं प्रवहणस्वामी अग्रतः प्रवहणमधिरोहामि।

विटः। भवानेव ब्रवीति।

शकारः। जइवि हग्गे एवं भणामि, तथावि तुए एश आचाले, अहिलुहेत्ति भट्टके, भणिउं (१)।

विटः। आरोहतु भवान्।

शकारः। एशे शंपदं अहिलुहामि। पुत्तका थावलका चेडा, पडिवत्तावेहि पवहणं (२)।

चेटः ॥ परावृत्य ॥ अहिलुहदु भट्टालके (३)

शकारः ॥ अधिरुह्यावलोक्य च शङ्कां नाटयित्वा त्वरितमवतीर्य्य विटं कण्ठे अवलम्ब्य ॥ भावे, मले! पवहणाधिलूढा लक्खशी चोले वा पलिवशदि; ता जइ लक्खशी, तदो उभवि मूशे; अध चोले, ता उभेवि खज्जे (४)।

---

(१) यद्यप्यहमेवं भणामि, तथापि तवैष आचारः, अधिरोहेति भट्टारकं, भणितुं।

(२) एष साम्प्रतं अधिरोहामि। पुत्रक स्थावरक चेट परिवर्त्तय प्रवहणं।

(३) अधिरोहतु भट्टारकः।

(४) भाव, अहं म्रिये; प्रवहणाधिरूढा राक्षसी चौरो वा प्रतिवसति, तत् यदि राक्षसी, तदा उभावपि मुषितौ; अथ चोरः, तदा उभावपि खादितौ।

विटः। न भेतव्यं; कुतोऽत्र वृषभयाने राजश्यालः। असम्भ्रम, मे मध्याह्नार्कतापविप्लुतदृष्टेः स्थावरकस्य चक्षुषो छाया दृष्टा, भ्रान्तिरुत्पन्ना।

शकारः। पुत्तका थावलका चेडा जीवेशि? (१)

चेटः। अध इं? (२)

शकारः। भावे, पवहणाहिं इत्थिआ पडिवशदि; ता अवलोएहि (३)।

विटः। कथं? स्त्री!

अवनतशिरसः प्रयाम शीघ्रं पथि, वृषभा इव वर्षताडिताक्षाः,
मम हि सदसि गौरवप्रियस्य कुलजनदर्शनकातरं हि चक्षुः॥

वसं ॥सविस्मयमात्मगतं॥ कधं, मम णअणाणं आआसआरो जेव्व राअशालओ; ता संसइदम्हि, मन्दभाआ। एसो दाणिं मम मन्दभाइणीए ऊसरच्छेतपडिदा विअ बीअमुट्ठी णिप्फलो इध आगमणो संवुत्तो; ता किं एत्थ करइस्सं? (४)

---

(१) पुत्रक स्थावरक चेट जीवसि?

(२) अथ किं?

(३) प्रवहणाभ्यः स्त्री प्रतिवसति; तदवलोकय।

(४) कथं मम नयनयोरायासकर एव राजश्यालः। तत् संशयितास्मि, मन्दभाग्या। एतदिदानीं मम मन्दभागिन्या

शकारः। काहले क्खु एशे वुड्ढचेडे पवहणं णावलो-कदि। भावे, आलोएहि पवहणं (१)।

विटः। कोऽदोषः। भवत्वेवं तावत्।

शकारः। कधं शिआलआ उड्डएन्ति, वाअशा वज्जन्ति; ता, जाव भावे अक्खीहिं भक्खीअदि, दन्तेहिं पेक्खीअदि, ताव हगे पलाइश्शं (२)।

विटः ॥ वसन्तसेनां दृष्ट्वा, सविषादमात्मगतं॥ कथं! अये, मृगी व्याघ्रमनुसरति। भोः कष्टं!

शरच्चन्द्रप्रतीकाशं पुलिनान्तरशायिनं,
हंसी हंसं परित्यज्य, वायसं समुपस्थिता।

२ ॥ जनान्तिकं॥ वसन्तसेने न युक्तमिदं, नापि सदृशमिदं; पूर्वं मानादवज्ञाय द्रव्यार्थं जननीवशात्?

॥ वसन्तसेना शिरश्चालयति ॥

---

अपरक्षेत्रपतित इव वीजमुष्टिः निष्फलमिहागमनं सम्वृत्तं; तत्किमद्य करिष्यामि।

(१) कातरः खल्वेष वृद्धचेटः प्रवहणं नावलोकयति। भाव आलोकय प्रवहणं।

(२) कथं शृगाला उड्डयन्ते, वायसा व्रजन्ति; तत् यावत् भावः अक्षिभ्यां भक्ष्यते, दन्तैः प्रेक्ष्यते, तावदहं पलायिष्ये।

विटः। [illegible] भावेन [illegible] मन्यते।

ननूक्तमेव मया भवतीं प्रति।

यमनुपचर, भद्रे, सुप्रियं वाप्रियं वा।

वधूः। पवहणविपल्लासेण आअदा, सरणागदम्हि (१)।

विटः। न भेतव्यं, न भेतव्यं। भवतीं न वञ्चयामि ॥ शकारमुपगम्य ॥ काणेलीमातः! सत्यं राक्षसी वात्र प्रतिवसति।

शकारः। भावे, भावे, जइ रक्खसी पडिवसदि, ता कीस ण तुमं मूसेदि? अथवा, चोले, ता किं तुमं ण भक्खिदे? (२)

विटः। किमनेन विरूपितेन; यदि पुनरुद्यानपरम्परया पद्भ्यामेव नगरीमुज्जयिनीं प्रविशावः, तदा को दोषः स्यात्।

शकारः। एवं किदे, किं भोदि (३)।

विटः। एवं कृते, व्यायामः सेवितो, धुर्य्याणां च परिश्रमः परिहृतोभवति।

शकारः। एवं भोदु। थावलआ पेडा, णेह पवहणं; अथवा, चिट्ठ, चिट्ठ। देवदाणं बम्हणाणं च अग्गादो चलणेण गच्छामि। णहि, णहि, पवहणं अहिलुहिअ गच्छामि। जेण

---

(१) प्रवहणविपर्य्यासेनागता, शरणागतास्मि।

(२) यदि राक्षसी प्रतिवसति, तत्किं न त्वां मुष्णाति? अथवा चौरः तदा किं त्वं न भक्षितः?

(३) एवं कृते किं भवति।

दूलदो मं पेक्खिअ भणिश्शंति, एशे शे लट्ठिअशाले भट्टा लके गश्चदि (१)।

विटः ॥ स्वगतं ॥ दुष्करं विषमौषधीकर्तुं । भवत्वेवं तावत् ॥ प्रकाशं ॥ काणेलीमातः, एषा वसन्तसेना भवन्तमभिसारयितुमागता।

वसं। सन्तं, पावं।(२)

शकारः ॥ सहर्षं ॥ भावे, मं पवलपुलिशमणुश्शं वाशुदेवाकं (३)।

विटः। अथ किं?

शकारः। तेण हि अपुव्वा शिली शमाशादिदा, तश्शिं काले मए लोशादिदा; शम्पदं पादेशुं पडिअ पशादेमि (४)।

विटः। साध्वभिहितं।

---

(१) एवं भवतु। स्थावरक चेट, नय प्रवहणं; अथवा, तिष्ठ, तिष्ठ। देवतानां ब्राह्मणानां चाग्रतः चरणेन गच्छामि। नहि, नहि, प्रवहणमधिरुह्य गच्छामि। येन दूरतो मां प्रेक्ष्य भणिष्यन्ति, एष स राष्ट्रियश्यालो भट्टारको गच्छति।

(२) शान्तं, पापं, प्रतिहतममङ्गलमिति।

(३) मां प्रवलपुरुषमनुष्यं वासुदेवाकं।

(४) तेन हि अपूर्व्वा श्रीः समासादिता, तस्मिन् (काले) मया रोषिता; साम्प्रतं पादयोः पतित्वा प्रसादयामि।

॥ [illegible] ॥ एशे पादेशुं पडेमि ॥ इति वसन्तसेनामुप
सृत्य ॥ अत्तिके, अम्बिए, शुणु मम विण्णत्तिं।

एशे पडामि चलणेशु विशालणेत्ते
हत्थञ्जलिं दशणहे तव शुद्धदन्ति ;
जं तं मए अवकिदं मदणाउलेण,
तं खम्मिदाशि, वलगत्ति ; तवम्हि दाशे (१)।

वसं ॥ सक्रोधं ॥ अवेहि, अणज्जं मन्तेसि (२) ॥ इति
पादेन ताडयति ॥

शकारः ॥ सक्रोधं ॥

जे चुंबिदे अंबिकमादुकेहिं, गदे ण देवाणवि जे पणामं,
शे पाडिदे पादतलेण मुण्डे, वणे शिआलेण जधा मुदङ्गे (३)॥

---

(१) एष पादयोः पतामि। हे मातः, अम्बिके, शृणु मम
विज्ञप्तिं।

एष पतामि चरणयोर्विशालनेत्रे
हस्ताञ्जलिं दशनखे तव शुद्धदन्ति ;
यत्तन्मया अपकृतं मदनातुरेण,
तत्क्षामितासि, वरगात्रि ; तवास्मि दासः।

(२) अपेहि, अनार्य्यं मन्त्रयसि।

(३) यच्चुम्बितं अम्बिकामातृकाभिः, गतं न देवानामपि यत्प्रणामं।
तत्पातितं पादतलेन मुण्डं, वने शृगालेन यथा मृताङ्गं।

अले, थावलआ चेडा, कहिं तुए एशा शमाशादिदा (१)।

चेटः। भट्टके गामशअलेहिं लुद्धे लाअमग्गे, तदो चालुदत्तश्श लुक्खवाडिआए पवहणं थाविअ, तहिं ओदलिअ, जाव चक्कवट्टिअं कलेमि, ताव एशा पवहणविपज्जाशेण इह आलुढेत्ति तक्केमि (२)।

शकारः। कधं; पवहणपलट्टणेण आगदा, ण मं अहि शीलिदुं; ता ओदल, ओदल, मम केलकादो पवहणादो। तुमं तं दलिद्दशट्ठवाहपुत्तहकं अहिशालेशि, मम केलकाइं गोणाइं वाहेशि; ता ओदल, ओदल, गब्भदाशि, ओदल, ओदल (३)।

(१) अरे स्थावरक चेट, कुत्र त्वया एषा समासादिता।

(२) भट्टक, ग्रामशकटैरुद्धे राजमार्गे, तदा चारुदत्तस्य वृक्षवाटिकायां प्रवहणं स्थापयित्वा, तत्रावतीर्य्य, यावत् चक्र परिवृत्तिं करोमि, तावदेषा प्रवहणविपर्य्यासेनेहारूढेति तर्कयामि।

(३) कथं; प्रवहणविपर्य्ययेणागता, न मामभिशीलितुं; तदवतर, अवतर, मम कृतात् प्रवहणात्। त्वं तं दरिद्रसार्थ वाहपुत्रकमभिसारयसि, मदीयान् वृषभान् वाहयसि, तद वतर, अवतर, गर्भदासि, अवतर, अवतर।

वसं। तं अज्ज चारुदत्तकं अहिसारेमित्ति; जं सच्चं, अलं किदह्मि इमिणा वअणेण। सम्पदं जं भोदु, तं भोदु (१)।

शकारः। एदेहिं दे दशणहुप्पलमण्डलेहिं,
हत्थेहिं, चाडुशदताडणलम्पडेहिं,
कड्ढामि दे वलतणुं णिअजाणकादो,
केशेशु, वालिदइअं विअ जह्व जडाउ (२)।

विटः। अग्राह्या मूर्द्धजेष्वेताः स्त्रियो गुणसमन्विताः,
न लतापल्लवच्छेदमर्हन्त्युपवनोद्भवाः।

तदुत्तिष्ठ, त्वमहमेनामवतारयामि। वसन्तसेने, अवतीर्य्यतां।

वसं ॥ अवतीर्य्य एकान्ते स्थिता ॥

शकारः ॥ स्वगतं॥ जे शे मम वअणावमाणेण तदा लोशग्गी शंधुक्किदे, अज्ज, एदाए पादप्पहालेणाणेण पज्जलिदो; तं शंपदं मालेमि णं। भोदु एव्वं दाव ॥ प्रकाशं॥ भावे, भावे,

---

(१) तमार्य्यचारुदत्तमभिसारयामीति; यत्सत्यं, अलङ्कृतास्मि अमुना वचनेन। साम्प्रतञ्च यद्भवतु, तद्भवतु।

(२) एताभ्यां ते दशनखोत्पलमण्डलाभ्यां,
हस्ताभ्यां, चाटुशतताडनलम्पटाभ्यां,
कर्षामि तव वरतनुं निजयानका,
त्केशेषु, वालिदयितामिव यथा जटायुः।

जदिच्छसि लंबदशाविशालं पावालअं सुत्तशदेहिं जुत्तं,
मंशं च खादुं, तह तुट्ठि कादुं, चुहुचुहु चुक्कु चुहुचुहु त्ति (१)।

विटः। ततः किं।

शकारः। मम पिअं कलेहि (२)।

विटः। वाढं, करोमि; वर्जयित्वा अकार्य्यं।

शकारः। भावे, अकज्जाह गंधेवि णत्थि; लक्खशी कावि णत्थि (३)।

विटः। उच्यतां तर्हि।

शकारः। मालेहि वसंतशेणिअं (४)।

विटः ॥ कर्णौ पिधाय ॥

वालां, स्त्रियञ्च, नगरस्य विभूषणञ्च,
वेश्यामवेशसदृशप्रणयोपचारां,
एनामनागसमहं यदि घातयामि,
केनोडुपेन परलोकनदीं तरिष्ये। |2))

---

(१) योऽसौ मम वचनावमानेन तदा रोषाग्निः संधुक्षितः, अद्य एतस्याः पादप्रहारेणानेन प्रज्वलितः; तस्मादेतं मारयाम्येनां। भवतु एवं तावत्।

यदीच्छसि लम्बदशाविशालं प्रावारकं सूत्रशतैर्युक्तं,
मांसञ्च खादितुं, तथा तुष्टिं कर्त्तुं, चुहुचुहु चुक्कु चुहुचुहु इति।

(२) मम प्रियं कुरु।

(३) अकार्य्यस्य गन्धोऽपि नास्ति, राक्षसी कापि नास्ति।

(४) मारय वसन्तसेनां।

शकारः। अहं ते भेडकं दइस्सं। अण्णंच, विवित्ते उज्जाणे इध मालन्तं को तुमं पेक्खिस्सदि (१)।

विटः। पश्यन्ति मां दशदिशो, वनदेवताश्च,
चन्द्रश्च, दीप्तकिरणश्च दिवाकरोऽयं,
धर्म्मानिलौ च, गगनञ्च, तथान्तरात्मा,
भूमिस्तथा, सुकृतदुष्कृतसाचिभूता।

शकारः। तेण हि पडन्तोवलिदं कदुअ मालेहि (२)।

विटः। मूर्ख, अपध्वस्तोऽसि।

शकारः। अधम्मभीलू एशे वुड्ढ खोले। भोदु; थावलचेडं अणुणेमि। पुत्तका, थावलका, चेडा; शोवण्णखलुआइं दइश्शं (३)।

चेटः। अहंवि परिहिलिश्शं (४)।

शकारः। शोवण्णं दे पीठके कालइश्शं (५)।

---

(१) अहं ते उडुपं दास्यामि। अन्यच्च, विविक्ते उद्याने इह मारयन्तं कस्त्वां प्रेक्षिष्यते।

(२) तेन हि पटान्तरे वारितां कृत्वा, मारय।

(३) अधर्म्मभीरुरेष वृद्धशृगालः। भवतु; स्थावरकचेटमनुनयामि। पुत्रक, स्थावरक, चेट; सुवर्णकटकानि दास्यामि।

(४) अहमपि परिधास्यामि।

(५) सौवर्णं ते पीठकं कारयिष्यामि।

चेटः। अहंवि उवविश्शिश्शं (१)।

शकारः। सव्वं दे उश्चिट्ठं दइश्शं (२)।

चेटः। अहंवि खाइश्शं (३)।

शकारः। शव्वचेडकाणं महत्तलकं कलइश्शं (४)।

चेटः। भट्टके ऊविश्शं (५)।

शकारः। ता मणेहि मम वअनं (६)।

चेटः। भट्टके, शव्वं कलेमि, वज्जिअ अकज्जं (७)।

शकारः। अकज्जाह गंधे वि णत्थि (८)।

चेटः। भणादु भट्टके (९)।

शकारः। एणं वशंतशेणिअं मालेहि (१०)।

---

(१) अहमपि उपवेक्ष्यामि।

(२) सर्व्वंते उच्छिष्टं दास्यामि।

(३) अहमपि खादिष्यामि।

(४) सर्व्वचेटकानां महत्तरकं कारयिष्यामि।

(५) भट्टको भविष्यामि।

(६) तन्मन्यस्व मम वचनं।

(७) भट्टक, सर्व्वं करोमि, वर्जयित्वा अकार्य्यं।

(८) अकार्य्यस्य गन्धोऽपि नास्ति।

(९) भणतु भट्टकः।

(१०) एनां वसन्तसेनां मारय।

चेटः। पशीदटु भट्टके। इअं मए अणज्जेण अज्जा पव हणपडिवत्तणेण आणीदा (१)।

शकारः। अले चेडा, तवावि ण पहवामि (२)।

चेटः। पहवदि भट्टके शलीलाह, ण चालित्ताह; ता पशीदटु, पशीदटु, भट्टके; भाआमि खु अहं (३)।

शकारः। तुमं चेडे मम भविअ, कश्श भाआशि (४)।

चेटः। भट्टके; पललोअश्श (५)।

शकारः। के शे पललोए (६)।

चेटः। भट्टके, शुकिददुक्किदश्श पलिणामे (७)।

शकारः। केशले शुकिदश्श पलिणामे (८)।

---

(१) प्रसीदतु भट्टकः। इयं मयानार्य्येण आर्य्या प्रवहण परिवर्त्तनेनानीता।

(२) अरे चेट, तवापि न प्रभवामि।

(३) प्रभवति भट्टारकः शरीरस्य, न चारित्र्यस्य; तत्प्रसीदतु, प्रसीदतु, भट्टकः; बिभेमि खल्वहं।

(४) त्वं चेटो मम भूत्वा कस्मात् बिभेषि।

(५) भट्टारक; परलोकात्।

(६) कः स परलोकः।

(७) भट्टक, सुकृतदुष्कृतस्य परिणामः।

(८) कीदृशः सुकृतस्य परिणामः।

चेटः। जादिशे भट्टके वज्ञशोवस्ममण्डिदे (१)।

शकारः। दुःकिदश्श कीलिशे (२)।

चेटः। जादिशे हगे पडपिंडभक्खके भूदे। ता, अक्कर्ज्जं ण कलइश्शं (३)।

शकारः। अले ण मालिश्शशि ॥ इति बहुविधं ताडयति ॥ (४)

चेटः। पिट्टदु भट्टके; मालेदु भट्टके; अक्कज्जं ण कलइश्शं। जेण म्हि गब्भदाशे विणिम्मिदे भाअधेअदोशेहिं, अहिअं च ण कीणिश्शं, तेण अहं अकज्जं पडिहलामि (५)।

वसं। भाव, शलणागदम्हि (६)।

---

(१) यादृशो भट्टको वज्रसुवर्णमण्डितः।

(२) दुष्कृतस्य कीदृशः।

(३) यादृशोऽहं परपिण्डभक्षकोभूतः। तत् अकार्य्यं न करिष्यामि।

(४) अरे, न मारयिष्यसि।

(५) ताडयतु भट्टकः; मारयतु भट्टकः; अकार्य्यं न करिष्यामि। येनास्मि गर्भदासोविनिर्म्मितो भागधेयदोषैः, अधिकञ्च न क्रीणिष्यामि, तेनाकार्य्यं परिहरामि।

(६) शरणागतोऽस्मि।

विटः। काणेलीमातः! मर्षय, मर्षय। साधु, स्थावरक, साधु!

अप्येष नाम परिभूतदशोदरिद्रः
प्रेष्यः परत्र फलमिच्छति, नास्य भर्त्ता;
तस्मादमी कथमिवाद्य न यान्ति नाशं,
ये वर्द्धयन्त्यसदृशं, सदृशं त्यजन्ति।

अपिच।

रन्ध्रानुसारी विषमः कृतान्तोयदस्य दास्यं तव चेश्वरत्वं,
श्रियं त्वदीयां यदयं न भुङ्क्ते, यदेतदाज्ञां न भवान् करोति।

शकारः ॥ स्वगतं ॥ अधम्मभिलुए वुड्ढखोडे; पललोअभिलू एशे गब्भदाशे; हगे लष्टिअशाले कश्श भाआमि, वलपुलिशमणुश्शे ॥ प्रकाशं ॥ अले गब्भदाश चेडे, गच्छ तुमं; अई ओवलके पविशिअ, वीशन्ते एअन्ते चिट्ठ (१)।

चेटः। जं भट्टके आणवेदि ॥ वसन्तसेनामुपसृत्य ॥ अज्जए एत्तिके मे विहवे (२) ॥ इति निष्क्रान्तः॥

---

(१) अधर्मभीरुकोवृद्धधूर्तगालः; परलोकभीरुरेष गर्भदासः; अहं राष्ट्रियश्यालः कस्य बिभेमि, वरपुरुषमनुष्यः, अरे गर्भदास, चेट, गच्छ त्वं; अयि अपवारके प्रविश्य, विश्रान्त एकान्ते तिष्ठ।

(२) यत् भर्त्ता आज्ञापयति। एतावान् मे विभवः।

शकारः ॥ परिकरं बध्नन्॥ चिट्ठ, वशन्तशेणिए, चिट्ठ; मालइश्शं (१)।

विटः। आः ममाग्रतोव्यापादयिष्यसि॥ इति गले गृह्णाति॥

शकारः ॥ भूमौ पतति॥ भावे, भट्टकं मालेअदि ॥ इति मोहं नाटयति॥ चेतनां लब्ध्वा ॥

शव्वकालं मए पुट्ठे मंशेण अ घिएण अ,
अज्ज कज्जे समुप्पन्ने, जादे मे वेलए कधं।

॥विचिन्त्य॥ भोदु; लद्धे मए उवाए। दिण्णा वुड्ढखोडेण शिर स्चालण शंणा। ता, एदं पेशिअ, वसंतशेणिअं मालइश्शं; एव्वं दाव ॥प्रकाशं॥ भावे, जं तुमे मए भणिदे, तं कधं हगे एव्वं वड्ढकाहिं मल्लकप्पमाणाहिं कुलेहिं जादे, अकज्जं कलेमि? एव्वं एदं अंगीकालीवेदुं मए भणिदं (२)।

---

(१) तिष्ठ, वसन्तसेने, तिष्ठ; मारयिष्यामि।

(२) भावो भट्टकं मारयति।

सर्व्वकालं मया पुष्टोमांसेन च घृतेनच,
अद्य कार्य्ये समुत्पन्ने, जातोमे वैरिकः कथं।

भवतु; लब्धोमया उपायः। दत्ता वृद्धशृगालेन शिरश्चालनसंज्ञा। तदेतं प्रेष्य, वसन्तसेनां मारयिष्यामि; एवं तावत्। भाव, यत् त्वं मया भणितः, तत्कथमहं वृहत्तरैः पत्रपुट प्रमाणैः कुलैर्जातः, अकार्य्यं करोमि? एवमेतदङ्गीकारयितुं मया भणितं।

विटः। किं कुलेनोपदिष्टेन, शीलमेवात्र कारणं;

भवन्ति सुतरां स्फीताः सुक्षेत्रे कण्टकिद्रुमाः।

शकारः। भावे, एशा तव अग्गदो लज्जाअदि; ण म अंगीकलेदि। ता गछ; थावलअ चेडे मए पिट्टिदे गदेवि; एशे पलाइअ गछदि। ता तं गेह्णिअ, आअच्छदु भावे (१)।

विटः ॥ स्वगतं ॥

अस्मत्समक्षं हि वसन्तसेना शौण्डीर्य्यभावान्न भजेत मूर्खं;

तस्मात्करोम्येष विविक्तमस्याः विविक्तविश्रम्भरसो हि कामः

॥ प्रकाशं ॥ एवं भवतु; गछामि।

वसं ॥ पटान्ते गृहीत्वा ॥ णं भणामि, शरणागदम्हि (२)।

विटः। वसन्तसेने, न भेतव्यं, न भेतव्यं। काणेलीमातः, वसन्तसेना तव हस्ते न्यासः।

शकारः। एव्वं मम हस्ते एशा णाशेण चिट्ठदु (३)।

विटः। सत्यं।

(१) एषा तवाग्रतो लज्जते; न मामङ्गीकरोति। तद्गच्छ; स्थावरक चेटः मया ताडितः गतोऽपि; एष प्रपलाय्य गच्छति। तस्मात्त्वं गृहीत्वा, आगच्छतु भावः।

(२) ननु भणामि, शरणागतास्मि।

(३) एवं मम हस्ते एषा न्यासेन तिष्ठतु।

शकारः। सच्चं (१)।

विटः ॥किंचिद्गत्वा॥ अथवा मयि गते, नृशंसोहन्या देनां; तदपवारितशरीरः पश्यामि तावदस्य चिकीर्षितं ॥ इत्येकान्ते स्थितः॥

शकारः। भोदु, मालिश्शं। अधवा; कवडकावडिके एशे वम्हणे वुड्ढखोडे, कदावि ओवालिदशलीले गडिअ, शिआले भविअ, ऊलुभुलिं कलेदि। ता, एदस्स वञ्चणाणिमित्तं एवं दाव कलइश्शं ॥कुसुमावचयं कुर्व्वन्नात्मानं मंडयति॥ वाशू, वाशू, वशंतशेणि एहि (२)।

विटः। अये,कामी संवृत्तः; हन्त निर्वृत्तोऽस्मि॥ गच्छामीति निष्क्रान्तः॥

शकारः। सुवण्णअं देमि,पिअम्वदेमि,पडेमि शीशेण शवेट्टणेण, तधावि मं णेच्छसि,शुद्धदन्ति,किंशेवअं कट्टमआ मणुश्शाः (३)।

---

(१) सत्यं।

(२) भवतु, मारयिष्यामि। अथवा; कपटकापटिक एष ब्राह्मणः वृद्धश्टगालः, कदापि अपवारितशरीरो गत्वा, श्टगालोभूत्वा, कपटं करोति; तदेतस्य वञ्चनानिमित्तं एवं तावत् करिष्यामि। हे वाले, हे वाले, वसन्तसेने, वसन्तसेने, एहि।

(३) सुवर्णं ददामि, प्रियं वदामि, पतामि शीर्षेण सवेष्टनेन, तथापि मां नेच्छसि, शुद्धदन्ति, किं सेवकं कष्टमया मनुष्याः।

वसं। को एत्थ सन्देहा॥ अवनतमुखो खलचरितमित्यादि श्लोकद्वयं पठति॥

खलचरितनिकृष्टजातदोषः,कथमिह मां परिलोभसे धनेन;
सुचरितचरितं विशुद्धदेहं, न हि कमलं मधुपाः परित्यजन्ति
यत्नेन सेवितव्यः पुरुषः कुलशीलवान् दरिद्रोऽपि,
शोभा हि पणस्त्रीणां सदृशजनसमाश्रयः कामः।

अवि अ।

सहआरपादवं सेविअ, पलाशपादवं अंगीकरइस्सं (१)।

शकारः। दाशी पधीए! दलिद्दचारुदत्ताके शहआलपादवे कडे, हगे उण पडाशे भणिदे, किंशुकेवि ण कडे। एव्वं तुमं मे गालिं देन्ती, अज्जवि तं जेव्व चारुदत्ताकं शुडमलेशि (२)।

वसं। हिअअगदो जेव्व किंत्ति न सुमरीअदि (३)।

---

(१) कोऽत्र सन्देहः। अपिच। सहकारपादपं सेविला, न पलाशपादपमङ्गीकरिष्यामि।

(२) दास्याः पुत्रि! दरिद्रचारुदत्तकः सहकारपादपः कृतः, अहं पुनः पलाशोभणितः, किंशुकोऽपि न कृतः। एवं त्वं मह्यं गालीं ददती, अद्यापि तमेव चारुदत्तकं स्मरसि।

(३) हृदयगतएव किमिति न स्मर्य्यते।

शकारः। अज्जवि दे हिअअगदं, तुमं समं जेव्व, मोडेमि। ता दलिद्दअत्तवाहअमणुस्सकामुकिणि, चिट्ठ, चिट्ठ (१)।

वसं। भण, भण पुणोवि, सलाहणिआइं एदाइं अक्खराइं (२)।

शकारः। पडिच्चाअदु, दाशीएपुत्ते, दलिद्दचालुदत्ताके तुमं (३)।

वसं। परिच्चाअदि जदि मं पेक्खदि (४)।

शकारः। किं शे शक्के, वालिपुत्ते, महिन्दे,
लंभापुत्ते, कालणेमी, शुबन्धू,
लुद्दे एआ दोणपुत्ते, जडाउ,
चाणक्के वा, धुन्धुमाले, तिशंकू? (५)

---

(१) अद्यापि ते हृदयगतं, त्वां सममेव, मोटयामि। तद्दरिद्रसार्थवाहकमनुष्यकामुकि, तिष्ठ, तिष्ठ।

(२) भण, भण पुनरपि, श्लाघनीयानि अक्षराणि।

(३) परित्रायतां दास्याः पुत्रः चारुदत्तकः त्वां।

(४) परित्रायते यदि मां प्रेक्षते।

(५) किंस शक्रो, वालिपुत्रो, महेन्द्रो,
रम्भापुत्रः, कालनेमिः, सुबन्धुः,
रुद्रेरात्मा, द्रोणपुत्रो, जटायुः,
चाणक्यो, वा धुन्धुमारः, त्रिशङ्कुः

अथवा। एदेवि दे ण लक्खन्ति।

चाणक्केण जधा सीदा मालिदा भालिधे युगे,

एव्वं दे मोडइश्शामि, जडाउविअ दोवदिं (१)।

॥ इति ताडयितुमुद्यतः ॥

वसं। हा अत्ते कहिं सि! हा अज्जचारुदत्त! एसो जणो असंपुण्णमणोरधोजेव्व विवज्जदि। ता उद्धं अक्कंदइस्सं? अथवा, वसन्तसेणा उद्धं अक्कंददित्ति लज्जणीअं। क्खु, एदं; णमो अज्जचालुदत्तस्स (२)।

शकारः। अज्जवि, गब्भदाशी, तश्श जेव्व पावस्स णामं गेह्णदि ॥ इति कंठे पीडयन् ॥ शुमल, गब्भदाशि, शुमल (३)।

वसं। णमो अज्जचालुदत्तस्स (४)।

---

(१) अथवा एतेऽपि ते त्वां न रक्षन्ति।

चाणक्येन यथा सीता, मारिता भारते युगे,

एवं त्वां मोटयिष्यामि, जटायुरिव द्रौपदीं।

(२) हा मातः कुत्रासि! हा आर्य्य चारुदत्त! एष जनः असम्पूर्णमनोरथएव विपद्यते। तदूर्द्धमाक्रन्दिष्यामि; अथवा, वसन्तसेना ऊर्द्धमाक्रन्दतीति लज्जनीयं; खल्वेतत्, नमः आर्य्यचारुदत्तस्य।

(३) अद्यापि, गर्भदासी, तस्यैव पापस्य नाम गृह्णाति। स्मर, गर्भदासि, स्मर।

(४) नम आर्य्य चारुदत्तस्य।

शकारः। मल, गब्भदाशि, मल (१) ॥ नाट्येन कंठे निपीडयन् मारयति। वसन्तसेना मूर्छिता पतति निश्चेष्टा॥

शकारः ॥ सहर्षं ॥

एदं दोषकलंडिअं, अविणअश्शावाशभूदं खलं,
लत्तं तश्श किलागदश्श लमणे कालागदं आअदं।
किं एशे शमुदाहलामि णिअअं वाहुणशूलत्तणं,
णीशाशेवि मले इअं च सुमला, शीदा जधा भालदे।
इच्छंतं मम णेच्छशित्ति, गणिआ लोशेण मे मालिदा;
सुण्णे पुप्फकलंड केत्ति सहसा पाशेण उत्ताशिदा
शेवावञ्चिदभादुके मम पिदा मादेव शा दोप्पदी,
जेशे पेक्खदि णेदिशं ववशिदं पुत्ताह शूलत्तणं (२)।

(१) म्रियतां, गर्भदासि, म्रियतां।

(२) एतां दोषकरण्डिकामविनयस्यावासभूतां खलां,
रक्तां तस्य किलागतस्य रमणे कालागतामागतां;
किमेष समुदाहरामि निजकं बाह्वोः शूरत्वं,
निश्वासेऽपि म्रियते इयञ्च सुमृता, सीता यथा भारते।
इच्छन्तं मां नेच्छसीति, गणिका रोषेण मे मारिता;
शून्ये पुष्पकरण्डके इति सहसा पाशेन उत्त्रासिता।
सेवावञ्चितभ्रातृके मम पिता मातेव सा द्रौपदी,
यस्याः पश्यति नेदृशं व्यवसितं पुत्रस्य शूरत्वं।

भोदु; संपदं वुड्ढखोडे आगमिश्शदित्ति; ता ओशलिअ चिट्ठामि ॥ तथा करोति (१) ॥ प्रविश्य चेटेन सह ॥

विटः। अनुनीतोमया स्थावरकश्चेटः। तद्यावत्काणेली मातरं पश्यामि ॥ परिक्रम्यावलोक्य च ॥ अये, मार्गएव पादयोर्निपतितः। अनेन च पतता स्त्री व्यापादिता। भोः पाप! किमिदमकार्य्यमनुष्ठितं त्वया। तवापि पापिनः पतनात् स्त्रीवधदर्शनेनातीव पातितावयं। अनिमित्तमेतत्, यत्सत्यं वसन्तसेनां प्रति शंकितं मे मनः, सर्वथा देवताः स्वस्ति करिष्यन्ति ॥ शकारमुपसृत्य ॥ काणेलीमातः, एवं मया अनुनीतः स्थावरकश्चेटः।

शकारः। भावे शाअदं दे; पुत्तका थावलक चेडा तवापि शाअदं (२)।

चेटः। अधदं? (३)

विटः। मदीयं न्यासमुपनय।

शकारः। कीदिशे णाशे! (४)

---

(१) भवतु; सांप्रतं वृद्धशृगालः आगमिष्यतीति; ततः अपसृत्य तिष्ठामि।

(२) स्वागतं ते; पुत्रक, स्थावरक तवापि स्वागतं।

(३) अथ किं?

(४) कीदृशो न्यासः।

विटः। वसन्तसेना।

शकारः। गदा (१)।

विटः। क्व।

शकारः। भावश्श जेव्व पिट्ठदो (२)।

विटः ॥ सवितर्कं॥ न गता सा खल्वनया दिशा।

शकारः। तुमं कदमाए दिशाए गडे? (३)

विटः। पूर्व्वया दिशा।

शकारः। शावि दक्खिणाए गडा (४)।

विटः। अहं दक्षिणया।

शकारः। शावि उत्तलाए (५)।

विटः। अत्याकुलं कथयसि; न शुद्ध्यति मे अन्तरात्मा, तत्कथय सत्यं।

शकारः। शवामि भावश्श शीशं अत्तणकेलकेहिं पादेहिं, ता संठावेहि हिअअं, एशा मए मालिदा (६)।

---

(१) गता।

(२) भावस्यैव पृष्ठतः।

(३) त्वं कतमया दिशा गतः?

(४) सापि दक्षिणया गता।

(५) सापि उत्तरया।

(६) शपामि भावस्य शीर्षं आत्मनः क्षताभ्यां पादाभ्यां, ततः संस्थापय हृदयं, एषा मया मारिता।

विटः ॥ सविषादं ॥ सत्यं, त्वया व्यापादिता?

शकारः। जइ मम वअणे ण पत्तिआअसि, ता पेक्ख पठमं लट्ठिअसिआलसंठाणाह शूलत्तणं (१) ॥ इति दर्शयति ॥

विटः। हा हतोऽस्मि मन्दभाग्यः! ॥ इति मूर्च्छितः पतति॥

शकारः। ही, ही, उवलदे भावे (२)।

चेटः। समश्शसदु, समश्शसदु, भावे। अविआलिअं पव हणं आणंतेण जेव्व मए पठमं मालिदा (३)।

विटः ॥ समाश्वस्य सकरुणं॥ हा वसन्तसेने।

दाक्षिण्योदकवाहिनी विगलिता याता स्वदेशं रति
र्हा हालंकृतभूषणे सुवदने क्रीडारसोद्भासिनि!
हा सौजन्यनदि प्रहासपुलिने! हा मादृशामाश्रये!
हा, हा! नश्यति मन्मथस्य विपणिः सौभाग्यपण्याकरः।

॥ सास्रं कष्टं॥

किन्तु, नाम, भवेत्कार्य्यमिदं येन त्वया कृतं।
अपापा पापकल्पेन नगरश्रीर्निपातिता।

(१) यदि मम वचनेन प्रत्ययसे, तत्पश्य प्रथमं राष्ट्रिय श्यालसंस्थानस्य शूरत्वं।

(२) ही, ही, उपरतोभावः।

(३) समाश्वसितु, समाश्वसितु, भावः। अविचारितं प्रव हणमानयता एव मया प्रथमं मारिता।

॥ स्वगतं ॥ अये कदाचिदयं पाप इदमकार्य्यं मयि संक्रामयेत्। भवत्वितोगच्छामि ॥ इति परिक्रामति ॥

शकारः ॥ उपगम्य धारयति ॥

विटः। पाप, मामास्प्राक्षीः। अलं त्वया; गच्छाम्यहं।

शकारः। अले, वशन्तशेणिअं शअं जेव्व मालिअ, मं दूशिअ, कहिं पलाअशि; शम्पदं ईदिशे हगे अणाधे पाविदे (१)।

विटः। अपध्वस्तोऽसि।

शकारः। अत्थं शदं देमि सुवण्णअं दे, कहावणं देमि शवेडिअं दे; एशे दुशद्दाण पलक्कमे मे, शामाणए भोदु मणुश्शआण (२)।

विटः। धिक् तवैवास्तु।

चेटः। शंतं पावं (३)।

शकारः ॥ हसति ॥

विटः। अप्रीतिर्भवतु, विमुच्यतां हि हासो,
धिक् प्रीतिं परिभवकारिकामनार्य्यां
माभूच्च त्वयि मम संगतं कदाचि
दाच्छिन्नं धनुरिव निर्गुणं त्यजामि। ७१

---

(१) अरे, वसन्तसेनां स्वयमेव मारयित्वा, मां दूषयित्वा, कुत्र पलायसे; सांप्रतमीदृशोऽहं अनाथः प्राप्तः।

(२) अर्थं शतं ददामि सुवर्णं ते, कहावणं ददामि सवेष्टिकं ते; एष दुःशब्दानां फलक्रमो मे, सामान्यकोभवतु मनुष्यकाणां।

(३) शान्तं पापं।

शकारः। भावे, पशीद, पशीद; एहि, णलिणीए पविशिअ कीलम्ह (१)।

विटः। अपतितमपि तावत्सेवमानं भवन्तं,
पतितमिव जनोऽयं मन्यते मामनार्य्यं।
कथमहमनुयायां त्वां, हतस्त्रीकमेनं,
पुनरपि नगरश्रीशङ्किताद्धांचिदृष्टं। |39|

॥ सकरुणं॥ वसन्तसेने!

अन्यस्यामपि जातौ मा वेश्याभूस्त्वं हि सुन्दरि,
चारित्र्यगुणसंपन्ने जायेथा विमले कुले। |40|

शकारः। मम केरके पुष्फकरंडकजिण्णुज्जाणे वशन्तसेणिअं मालिअ, कहिं पलाअशि? एहि, मम आवुत्तस्स अग्गदो ववहाले देहि (२)॥ इति धारयति॥

विटः। आः, तिष्ठ जाल्म ॥ इति खड्गमाकर्षति॥

शकारः ॥ सभयमपसृत्य॥ किं ले भीदेशि, ता गच्छ (३)।

विटः॥ स्वगतं॥ न युक्तमवस्थातुं। भवतु, यत्रार्य्यशर्विलकचंदनकप्रभृतयः संति, तत्र गच्छामि ॥ इति निष्क्रान्तः॥

---

(१) भाव, प्रसीद, प्रसीद; एहि, सरस्यां प्रविश्य क्रीडावः।

(२) मदीयपुष्पकरण्डकजीर्णोद्यानेवसन्तसेनां मारयित्वा, कुत्र पलायसे? एहि, मम आवुत्तस्याग्रतोव्यवहारं देहि।

(३) किं रे भीतोऽसि तद्गच्छ।

शकारः। णिधणं गछ। अले थावलक पुत्तका, कीलिशे मए कडे? (१)

चेटः। भट्टके, महंते अकज्जे कडे (२)।

शकारः। अले चेडे, किं भणाशि, अकज्जे कडेत्ति? भोदु एव्वं दाव ॥नानाभरणान्यवतार्य्य॥ गेह्ण एदं अलंकालअं; मए ताव दिण्णे, जेत्तिके वेले अलंकलेमि, तेत्तिकं वलं मम अणंतव (३)।

चेटः। भट्टके, जेव्व एदे शोहंति, किं मम एदेहिं (४)।

शकारः। ता गछ; एदाइं गोणाइं गह्णिअ, मम केल आए पाशादवालग्गपडोलिआए चिठ्ठ, जाव हगे आ अछामि (५)।

---

(१) निधनं गच्छ। अरे स्थावरक पुत्रक, कीदृशं मया कृतं?

(२) भट्टक, महदकार्य्यं कृतं।

(३) अरे चेट, किं भणसि, अकार्य्यं कृतमिति? भवतु, एवं तावत्। गृहाणेममलङ्कारं; मया तावद्दत्तं, यावत्यां वेलायां अलंकरोमि, तावतीं वेलां त्वमात्मानमलङ्कुरु।

(४) भट्टके, एव एते शोभन्ते; किं मम एतैः?

(५) तदा गच्छ, एतान् वृषभान् गृहीत्वा, मदीयायां प्रासादवालाग्रप्रतोलिकायां तिष्ठ, यावदहमागच्छामि।

चेटः। जं भट्टके आणवेदि (१) ॥ इति निष्क्रान्तः॥

शकारः। अत्तपलित्ताणे भावे गदे अदंशणं; चेडेवि पाशादवालग्गपडोलिआए णिअलपूलिअं कदुअ थावदूस्सं। एव्वं मंते लक्खिदे भोदि। ता गच्छामि; अधवा, पेक्खामि दाव एदं किं एषा मला, आदु पुणोवि मालइश्शं ॥ अवलोक्य॥ कधं सुमला। भोदु; एदिणा पावालेण पच्छादेमि णं। अधवा, णामंकिदे एशे, ता केवि अज्जपुलिशे पच्चहिज्जाणेदि। भोदु; एदिणा वादालीपुञ्जिदेण शुक्खपत्तपुडेण पच्छादेमि ॥ तथा कृत्वा, विचिन्त्य॥ भोदु; एव्वं दाव, संपदं अधिअलणं गच्छिअ ववहालं लिहावेमि। जहा अत्थश्श कालणाए शठ्ठवाह चालुदत्ताकेण मम केलकं पुप्फकलंडकं जिण्णुज्जाणं पवेशिअ, वसन्तशेणिआ वावादिदेत्ति। चालुदत्तविणाशाय कलेमि कवडं णवं। णअलिए विशुद्धाए पशुघादंव्व दालुणं। भोदु, गच्छामि ॥ इति निष्क्रम्य दृष्ट्वा सभयं॥ अविदमादिके! जेण जेण गच्छामि मग्गेण, तेणज्जेव्व एशे दुट्ठशमणके गहिद कशाओदकं चीवलं गेह्लिअ आअच्छदि; एशे मए णसि छिअ वाहिदे कदवेले कआवि मं पेक्खिअ, एदेण मालिदत्ति पआ शहस्सदि; ता कधं गच्छामि ॥ अवलोक्य॥ भोदु; एदं अद्ध

---

(१) यद्भट्टक आज्ञापयति।

पडिदं पागालखंडं उल्लंघिअ गच्छामि।

एशेह्मि तुलिदे लंका णअलीए गअणअ गच्छन्ते,

भूमीए पाआले हणूमशिहले विअ महेन्दे (१)

॥ इतिनिष्क्रान्तः ॥

(१) आत्मपरित्राणे भावोगतः अदर्शनं; चेटमपि प्रासाद वालाग्रप्रतोलिकायां निगडपूरितं कृत्वा स्थापयिष्यामि। एवं मन्त्रोरचितोभवति। तद्गच्छामि; अथवा, पश्यामि तावदेनां किमेषा मृता अथवा पुनरपि मारयिष्यामि। कथं, सुमृता। भवतु; एतेन प्रावरकेण प्रच्छादयाम्येनां; अथवा। नामाङ्कितएषः तत्कोऽपि आर्य्यपुरुषः प्रत्यभिज्ञास्यति। भवतु; एतेन वातालोपुञ्जितेन शुष्कपर्णपुटेन प्रच्छादयामि। भवतु; एवं तावत् सांप्रतं अधिकरणं गत्वा व्यवहारं लेख यामि, यथा अर्थस्य कारणाय सार्थवाहकचारुदत्तकेन मदीयं पुष्पकरण्डकं जीर्णोद्यानं प्रविश्य वसन्तसेना व्यापादि तेति। चारुदत्तविनाशाय करोमि कपटं नवं नगर्य्यां विशु द्धायां पशुघातमिव दारुणं। अविदमादिके! येन येन गच्छामि मार्गेण, तेनैव एष दुष्टश्रमणकोगृहीतकषायोदकं चीवरं गृहीत्वा आगच्छति; एष मया नसिं छित्वा वाहितः कृतवैरः कदापि मां प्रेक्ष्य, एतेन मारितेति प्रकाशयिष्यति;

प्रविश्य पटाक्षेपेण संवाहकोभिक्षुः। पच्छालिदे एशे मए चीवलखण्डे, किं णु ऊ शाहाए शुक्खावइश्शं। इध वाणला विलुम्पन्ति। किं णु ऊ भूमीए धूलीदोशे होदि; ता कहिं पशारिअ शुक्खाविश्शं ॥ दृष्ट्वा ॥ भोदु, इध वादालीपुञ्जिदे शुक्खवत्तसंचए पशालइस्सं ॥ तथा कृत्वा। णमो बुद्धस्स ॥ इत्युपविशति ॥ भोदु, धम्मक्खलाइं उदाहलामि ॥ पञ्चज्जणज्जेण मालिदे इत्यादिपूर्वोक्तं पठति॥ अधवा; अलं मम एदेण शग्गेण, जाव ताए बुद्धोवाशिआए पच्चुवकालं ण कलेमि, जाए दिशाणं सुवण्णकाणं कदे जूदिअलेहिं णिक्किदे, तदो पहुदि ताए कीदं विअ अत्ताणअं अवगच्छामि ॥ दृष्ट्वा ॥ किं णु ऊ पण्णोदले समूश्शशदि? अधवा,

वादादवेण तत्ता, चीवलतोएण तिम्मिदापत्ता,

एदे विट्ठिलपत्ता मण्णे पत्ताविअ फुरन्ति (१)।

वसं ॥ संज्ञां लब्ध्वा हस्तं दर्शयति ॥

---

तत्कथं गच्छामि। भवतु एतं अर्द्धपतितं प्राकारखण्डमुल्लङ्घ्य गच्छामि।

एषोऽहं त्वरितं तुलितः लङ्कानगर्य्यां गमने गच्छन्।

भूम्यां पाताले हनूमच्छिखरे इव महेन्द्रः।

(१) प्रक्षालितमेतन्मया चीवरखण्डं, किं नु खलु शाखायां शुष्कं करिष्यामि। इह वानरा विलुम्पन्ति। किं नु खलु

भिक्षुः। हा, हा, शुद्धालंकारभूषिदे इत्थिआ हत्थे णिक्क मदि! कधं, दुदिए विहत्थे ॥ बहुविधं निर्वर्ण्य॥ पच्चभिआ णामि विअ एदं हत्थं। अधवा, किं विचारेण? सच्चं; से जेव्व हत्थे जेण मे अभअं दिण्णं। भोदु, पेक्खिस्सं ॥ नाट्येनोद्घाट्य दृष्ट्वा प्रत्यभिज्ञाय च ॥ सा जेव्व बुद्धोवासिआ (१)।

वसं ॥ पानीयमाकाङ्क्षति ॥

भूम्यां धूलीदोषोभवति; तत्कुत्र प्रसार्य्य शुष्कं करिष्यामि। भवतु, इह वातालीपुञ्जिते शुष्कपत्रसञ्चये प्रसारयिष्यामि। नमोबुद्धाय। भवतु, धर्म्माक्षराणि उदाहरामि। अथवा; अलं ममैतेन स्वर्गेण, यावत्तस्यावसन्तसेनायाबुद्धोपासिकायाः प्रत्युपकारं न करोमि, यया दशानां सुवर्णकानां कृते द्यूतकराभ्यां निष्क्रीतः ततःप्रभृति तया क्रीतमिवात्मानमवगच्छामि। किन्नु खलु पर्णोदरे समुच्छ्वसिति? अथवा,

वातातपेन तप्तानि, चीवरतोयेनार्द्राणि पत्राणि,
एते विस्तीर्णपत्राः मन्ये पत्राइव स्फुरन्ति।

(१) शुद्धालङ्कारभूषितः स्त्रीहस्तोनिष्क्रामति! कथं; द्वितीयोऽपि हस्तः। प्रत्यभिजानामि इव एतं हस्तं। अथवा, सत्यं; सएव हस्तः येन मे अभयं दत्तं। भवतु, पश्यामि। सैव बुद्धोपासिका।

भिक्षुः। कधं, उदश्रं मग्गेदि। दूले च दिग्घिश्रा। किं दाणिं एत्थ कलइश्शं? भोदु, एदं चीवलं से उवरि गालइश्शं (१)॥ तथा करोति॥

वसं ॥ संज्ञां लब्ध्वा उत्तिष्ठति। भिक्षुः पटान्तेन वीजयति॥

वसं। अज्ज, को तुमं? (२)

भिक्षुः। किं मं ण शुमलेदि बुद्धोवाशिश्रा, दशशुवस्णणिक्कीदं (३)।

वसं। सुमलेमि ण उण जधा अज्जो भणादि, वरं अहं उवरदा जेव्व (४)।

भिक्षुः। बुद्धोवाशिए किं णेदं (५)।

वसं ॥ सनिर्व्वेदं॥ जं सरिसं वेसभावस्स (६)।

---

(१) कथमुदकं याचते। दूरे च दीर्धिका। किमिदानी मत्र करिष्यामि? भवतु, एतत् चीवरं अस्या उपरि चालयिष्यामि।

(२) आर्य्य, कस्त्वं?

(३) किं मां न स्मरति बुद्धोपासिका, दशसुवर्णनिष्क्रीतं।

(४) स्मरामि न पुनर्यथा आर्य्यो भणति, परमहमुपरता एव।

(५) बुद्धोपासिके किं नेदं।

(६) यत्सदृशं वेशभावस्य।

भिक्षुः। उट्ठेउ, उट्ठेउ, वुड्ढोवासिआ। एदं पादवसमी वजादं लदं ओलंविअ (१) ॥इति लतां नामयति। वसन्तसेना गृहीत्वा उत्तिष्ठति॥

भिक्षुः। एदस्सिं विहाले मम धम्मवहिणिआ चिट्ठदि; तहिं समस्सासिदमणाभविअ उवासिआ, गेहं गमिस्सदि। ता सेणं सेणं गच्छदु वुड्ढोवासिआ ॥ इति परिक्रामतः॥ दृष्ट्वा॥ ओसलध अज्जा, ओसलध; एसा तलुणी इत्थिआ, एसो भिक्खुत्ति; शुद्धे मम एशे धम्मे; हत्थसंजदमुहसंजदइंदिअ संजदे, शे खु माणुशे, किं कलेदि तश्श लाअउले पललोअ हत्थे णिस्सले (२)।

॥ इति निष्क्रान्ताः सर्व्वे॥

इति मृच्छकटिकायां वसन्तसेनामोटनोनामाष्टमोऽङ्कः।

---

(१) उत्तिष्ठतु, उत्तिष्ठतु, वुड्ढोपासिका। एतां पादपसमीपजातां लतामवलम्ब्य।

(२) एतस्मिन् विहारे मम धर्म्मभगिनी तिष्ठति; तत्र समाश्वस्तमनाभूत्वा उपासिका, गेहं गमिष्यति। ततः शनैः शनैर्गच्छतु वुड्ढोपासिका। अपसरत आर्य्या, अपसरत, एषा तरुणी स्त्री, एष भिक्षुरिति, शुद्धोमम एषधर्म्मः; हस्तसंयत मुखसंयतेन्द्रियसंयतः, स खलु मनुष्यः, किं करोति तस्य राज कुलं परलोकोहस्ते निश्चलइति।

# अथ नवमाङ्कः।

ततः प्रविशति शोधनकः। शोधनकः। आणत्तन्हि अधिअलणभोइएहिं; अले सोहणआ, ववहालमंडवं गदुअ, आसणाइं सज्जीकलेहित्ति। ता जाव अधिअलणमंडवं सज्जिदुं गच्छामि॥ परिक्रम्यावलोक्य च॥ एदं अधिअलणमंडवं, एश पविशामि॥ प्रविश्य संमार्ज्यासनमाधाय॥ विवित्तं कारिदं मए अधिअरणमंडवं, विरइदा मए आसणा; ता जाव अधिअलणिआणं उण णिवेदेमि॥ परिक्रम्यावलोक्य च॥ कधं, एशे लट्ठिअशालेदुट्ठदुज्जणमनुश्शे इदो एव्व आअच्छदि; ता दिट्ठिपधं परिहरिअ गमिश्शं (१)॥ इत्येकान्ते स्थितः॥ ततः प्रविशति उज्ज्वलवेशधारी शकारः।

---

(१) आज्ञप्तोऽस्मि अधिकरणभोजकैः; अरे शोधनक, व्यवहारमण्डपं गत्वा, आसनानि सज्जीकुरु इति। तत् यावदधिकरणमण्डपं सज्जितुं गच्छामि। इदमधिकरणमण्डपमेषोऽहं प्रविशामि। विविक्तं कारितं मयाधिकरणमण्डपं, विरचितानि च मयासनानि; तत् यावदाधिकरणिकानां निवेदयामि। कथमेष राष्ट्रियश्यालोदुर्ज्जनमनुष्य इत एवागच्छति; तद्दृष्टिपथं परिहृत्य गमिष्यामि।

शकारः। ह्नादोहं शलिलजलेहिं पाणिएहिं,
उज्जाणे उववणकानने णिषसे;
णालीहिं सह जुवदीहिं इत्थिकाहिं,
गंधव्वेहिं शुविहिदएहिं अंगकेहिं।

खणेण गंठी खणजूलके मे, खणेण मे चंचलकुन्तले वा,
खणेण मुक्के खण उद्धचूडे, चित्ते विचित्ते हगे लाअशाले।

अविअ। विशगंठिगब्भपविथ्येण विअ कीडएण अन्तलं मग्गमाणेण, पाविदं मए महदन्तलं; ता कश्श एदं किविण चेट्ठिअं पालदइश्शं ॥ स्मृत्वा ॥ आं, शुमलिदं, मए दलिद्दचारुदत्तश्श संभावीअदि। भोदु, अधिअलणमंडवं गदुअ, अग्गदो ववहालं लिहावइश्शं, जधा चारुदत्ताकेण वशन्तशेणिआ मोडिअ मालिदा; ता जाव अधिअलणमंडवं जेव्व गच्छामि ॥ परिक्रम्यावलोक्य च ॥ एदं तं अधिअलणमंडवं, एत्थ पविशामि ॥ प्रविश्यावलोक्य च॥ कधं, आसणाइं दिण्णाइं चिट्ठन्ति; दाव आअश्शंत्ति अधिअरणभोइआ, एदंश्शिं दुव्वचत्तले मुहुत्तअं उवविशिअ पडिवालइश्शं (१) ॥ तथा स्थितः ॥

(१) स्नातोऽहं सलिलजलैः पानीयैः, उद्याने उपवनकानने निषण्णः; नारीभिः सह युवतीभिः स्त्रीभिः, गन्धर्वैः सुविहितैः अङ्गकैः।

शोधनकः ॥ अन्यतः परिक्रम्य पुरोद्दृष्ट्वा ॥ एदे अधिअर णिआआअच्छन्ति। ता जाव उवसप्पामि (१)॥ इति उपसर्प्पति॥ ततःप्रविशति श्रेष्ठिकायस्थादिपरिवृत आधिकरणिकः॥

अधि। भो, भो, श्रेष्ठिकायस्थौ।

तौ। आणवेदु अज्जो (२)।

अधि। अहो व्यवहारपराधीनतया दुष्करं खलु परचित्तग्रहणमाधिकरणिकैः।

---

क्षणेन ग्रन्थिः क्षणं जूटकोमे, क्षणेन मे चञ्चलकुण्डलावा,
क्षणेन मुक्ताः क्षणमूर्द्धचूडा, चित्रविचित्रः अहं राजश्यालः।

अपिच। विषग्रन्थिगर्भप्रविष्टेनेव कीटकेनान्तरं मार्गमाणेन, प्राप्तं मया महदन्तरं; तत्कस्येदं कृपणचेष्टितं पालयिष्यामि। आं, स्मृतं, दरिद्रचारुदत्तस्य सम्भाव्यते। भवतु, अधिकरणमण्डपं गत्वा, अग्रतोव्यवहारं लेखयिष्यामि, यथा चारुदत्तेन वसन्तसेना मोचयित्वा मारिता; तत् यावदधिकरणमण्डपमेव गच्छामि। एतत्तदधिकरणमण्डपमत्र प्रविशामि। कथमासनानि दत्तानि तिष्ठन्ति; तावदागच्छन्ति अधिकरणभोजकाः, एतस्मिन् दूर्व्वाचत्वरे मुहूर्त्तमुपविश्य प्रतिपालयिष्यामि।

(१) एते अधिकरणिका आगच्छन्ति, तत् यावदुपसर्पामि।

(२) आज्ञापयतु आर्य्यः।

छन्नं कार्य्यमुपक्षिपन्ति पुरुषान्यायेन दूरीकृतं,
स्वान्दोषान् कथयन्ति नाधिकरणे रागाभिभूताः स्वयं;
तैःपक्षापरपक्षवर्द्धितबलैर्दोषैर्नृपः स्पृश्यते,
संक्षेपादपवादएव सुलभोद्रष्टुर्गुणोदूरतः।

अपिच।

छन्नं दोषमुदाहरन्ति कुपितान्यायेन दूरीकृताः,
स्वान्दोषान् कथयन्ति नाधिकरणे, सन्तोऽपि नष्टाध्रुवं;
ये पक्षापरपक्षदोषसहिताः पापानि संकुर्व्वते,
संक्षेपादपवादएव सुलभोद्रष्टुर्गुणोदूरतः।

यतः। अधिकरणिकः खलु।

शास्त्रज्ञः, कपटानुसारकुशलो, वक्ता, नच क्रोधन
स्तुल्योमित्रपरस्वकेषु, चरिते दृष्ट्वैव दत्तोत्तरः;
क्लीवान्पालयिता, शठान्व्यथयिता, धर्म्म्योऽतिलोभान्वितो,
द्वार्भावे परतत्वबद्धहृदयो, राज्ञश्च कोपापहः।

श्रेष्ठिकायस्थौ। अज्जस्स वि णाम गुणे दोसत्ति वुच्चदि जइ एव्वं, ता चन्दालोएवि अंधआरोत्ति वुच्चदि (१)।

अधि। भद्र शोधनक, अधिकरणमण्डपस्य मार्ग मादेशय।

---

(१) आर्य्यस्यापि नाम गुणे दोषइति उच्यते यद्येवं, तदा चन्द्रालोकेऽपि अन्धकारइति उच्यते।

शोधनकाः। एदु, एदु, अधिअलणभोइओ एदु (१)।

॥ इति परिक्रामन्ति ॥

शोधनकः। एदं अधिअलणमण्डवं, ता पविसन्तु अधिअलणभोइआ ॥ सर्व्वे च प्रविशन्ति ॥ (२)।

अधि। भद्र शोधनक, वहिर्निःक्रम्य, ज्ञायतां, कः कः कार्य्यार्थीति।

शोधनकः। जं अज्जोआणवेदि ॥ इति निष्क्रम्य ॥ अज्जा अधिअलणिआ भणन्ति, कोको इध कज्जत्थीति (३)।

शकारः ॥ सहर्षं ॥ उवत्थिए अधिअलणिए ॥ साटोपं परिक्रम्य ॥ हगे, वलपुलिशमणुश्शे वासुदेवे लट्ठिअशिआले लाअशाले कज्जत्थी (४)।

शोधनकः ॥ ससम्भ्रमं ॥ हीमादिके, पठमं जेव्व लट्ठिअशाले कज्जत्थी। भोदु; अज्ज, मुहुत्तं चिट्ठ, दाव अधिअलणि

---

(१) एतु, एतु, अधिकरणभोजक एतु।

(२) एतत् अधिकरणमण्डपं, तत्प्रविशन्तु अधिकरणभोजकाः।

(३) यदार्य्य आज्ञापयति। आर्य्या आधिकरणिका भणन्ति, कः क इह कार्य्यार्थीति।

(४) उपस्थिता अधिकरणिकाः। अह, वरपुरुषमनुष्यः वासुदेवः राष्ट्रियश्यालः राजश्यालः कार्य्यार्थी।

आणं णिवेदेमि ॥ उपगम्य ॥ अज्जा, एशे क्खु लट्ठिअशाले कज्जत्थी ववहालमुवत्थिदो (१)।

अधि। कथं, प्रथममेव राष्ट्रियश्यालः कार्य्यार्थी। यथा सूर्य्योदये उपरागो महापुरुषनिपातमेव कथयति। शोधनक, व्याकुलेनाद्य व्यवहारेण भवितव्यं; भद्र, निष्क्रम्योच्यतां गच्छाद्य न दृश्यते तव व्यवहार इति ॥

शोधनकः। जं अज्जो आणवेदित्ति (२) ॥ निष्क्रम्य शकार मुपगम्य॥ अज्ज, अधिअरणिआ भणंति। अज्ज गच्छ, ण दीशदि तव ववहाले (३)।

शकारः ॥ सक्रोधं ॥ किं, ण दीशदि मम ववहाले? जइ ण दीशदि, तदो आउत्तं लाआणं पालअं वहिणीवदिं विण्ण विअ, वहिणिअं अत्तिकं च विण्णविअ, एदं अधिअरणिअं फेलिअ, एत्थ अण्णं अधिअलणिअं गवइश्शं (४) ॥ इति गन्तु मिच्छति ॥

---

(१) हन्त प्रथममेव राजश्यालः कार्य्यार्थी। भवतु; आर्य्य, मुहूर्त्तं तिष्ठ, तावत् अधिकरणिकानां निवेदयामि। आर्य्या एष खलु राष्ट्रियश्यालः कार्यार्थी व्यवहारमुपस्थितः।

(२) यदार्य्य आज्ञापयति।

(३) आर्य्य, अधिकरणिका भणन्ति,। अद्य गच्छ, न दृश्यते तव व्यवहारः।

(४) किं, न दृश्यते मम व्यवहारः? यदि न दृश्यते,

शोधनकः। अज्ज, लट्ठिअशालअ, मुहुत्तअं चिट्ठ, दाव अधिअरणिआणं णिवेदेमि ॥ आधिकरणिकावुपगम्य॥ एशे लट्ठिअशाले कुविदे भणादि (१) ॥ इति तदुक्तं भणति ॥

आधि। सर्व्वमस्य मूर्खस्य संभाव्यते। भद्र, उच्यतां, आगच्छ; दृश्यते तव व्यवहारः।

शोधनकः ॥ शकारमुपगम्य ॥ अज्ज, अधिअरणिआ भणंति, आअच्छ (२)।

शकारः। पठमं भणन्ति न दीशदि, संपदं दीशदित्ति; ता णाम भीद भीदा अधिअलणभोइआ; जेत्तिअं हगे भणिश्शं, तेत्तिअं पत्तिआवइश्शं, भोदु, पविशामि ॥ प्रविश्योपसृत्य ॥ सुश्शुहं अह्माणं तुम्हाणंपि शुहं देमि, न देमि च (३)।

---

तदा आवुत्तं राजानं पालकं भगिनीपतिं विज्ञाप्य, भगिनीं मातरञ्च विज्ञाप्य, एतमाधिकरणिकं दूरीकृत्यान्यमाधिकरणिकमत्र स्थापयिष्यामि।

(१) आर्य्य, राष्ट्रियश्याल, मुहूर्त्तं तिष्ठ, तावत् आधिकरणिकानां निवेदयामि। एष राष्ट्रियश्यालः कुपितोभणति।

(२) आर्य्य, आधिकरणिकाभणन्ति, आगच्छ।

(३) प्रथमं भणन्ति न दृश्यते, साम्प्रतं दृश्यते; इति तत्

आधि ॥ स्वगतं॥ अहो स्थिरसंस्कारता व्यवहारार्थिनः ॥ प्रकाशं ॥ उपविश्यतां।

शकारः। आं; अत्तणकेलका शे भूमी; ता जहिं मे रोअदि तहिं उवविशामि ॥ श्रेष्ठिनं प्रति ॥ एश उवविशामि ॥ शोधनकं प्रति॥ णं, एत्थ उवविशामि ॥इति आधिकरणिक मस्तके हस्तं दत्वा॥ एश उवविशामि (१) ॥ इति भूमौ उपविशति ॥

आधि। भवान् कार्य्यार्थी।

शकारः। अधइं ? (२)

आधि। तत्कार्य्यं कथय।

शकारः। कस्से कज्जं कथयइस्सं। एश्वंडके मल्लकप्प माणाह कुले हगे जादे। लाअशशुले मम पिदा, लाआ

नाम भीतभीताअधिकरणभोजका; यावदहं भणिष्यामि, ताव त्प्रत्येष्यन्ते। भवतु, प्रविशामि। सुसुखं अस्माकं युष्माकमपि सुखं ददामि, न ददामि च।

(१) आं; आत्मीया ममैषा भूमी; यत्र मह्यं रोचते तत्रो पविशामि। एष उपविशामि। ननु अत्रोपविशामि। एष उपविशामि।

(२) अथकिं?

तादश्श होइ जामादा, लाअशिआले हग्गे, ममावि भइणी वदी लाआ (१)।

आधि। सर्व्वं जायते।

किं कुलेनोपदिष्टेन, शीलमेवात्र कारणं;

भवन्ति नितरां स्फीताविपिने कण्टकिद्रुमाः।

॥ तदुच्यतां कार्य्यं ॥

शकारः। एव्वं भणामि। अवलद्धादवि ण अ मे किंवि कलइस्सदि; तदो तेण वहिणीवदिणा वलितुट्ठेण मे कीलिदुं लक्खिदुं शव्वुज्जाणाणं पवले पुप्फकलंडकजिण्णुज्जाणे दिण्णे; तहिं च पेक्खिदुं अणुदिअहं, शोशावेदुं, शोधावेदुं, पोत्थावेदुं, लुणावेदुं, गच्छामि। देव्वजोएण पेक्खामि, न पेक्खामि वा, इत्थिअशलीलं णिवडिदं (२)।

---

(१) कर्णे कार्य्यं कथयिष्यामि। एतावदृद्धके मल्लकप्रमाणस्य कुले अहं जातः। राजश्वशुरो मम पिता राजा तातस्य भवति जामाता, राजश्यालोऽहं, ममापि भगिनीपतीराजा।

(२) एवंभणामि। अपराद्धस्यापि न च मे किमपि करिष्यति; ततस्तेन भगिनीपतिना परितुष्टेन मे क्रीडितुं रक्षितुं सर्व्वोद्यानानां प्रवरं पुष्पकरण्डकजीर्णोद्यानं दत्तं; तत्र च प्रेक्षितुं अनुदिवसं शुष्कं कारयितुं, शोधयितुं, पुष्टं कारयितुं, लूनं कारयितुं, गच्छामि। दैवयोगेन पश्यामि, न पश्यामि वा, स्त्री शरीरं निपतितं।

आधि। अथ जायते का स्त्री विपन्नेति?

शकारः ॥ हंहो अधिअलणभोइआ, किन्ति ण आ णामि तं तादिशिं णअलमण्डणं कंचनशदभूषणिअं। केणवि कुपुत्तेण अत्थकल्लवत्तश्श कालणादो शुण्णं पुप्फकलंडकजिसु ज्जाणं पविशिअ, वाऊपाशवलक्काले वशन्तशेणिआ मालिदा; ण मए (१)॥ इत्यर्द्धोक्ते च मुखमावृणोति॥

आधि। अहो नगररक्षिणां प्रमादः! भो श्रेष्ठिकायस्थौ। न मयेति, व्यवहारपदं प्रथममभिलिख्यतां।

कायस्थः। जं अज्जो आणवेदि॥ तथा कृत्वा॥ अज्ज, लिहिदं (२)।

शकारः॥ स्वगतं॥ हीमादिके! उत्तलाअत्तेण विअ पाय शपिण्डलकेण, अज्ज मए अत्ता एव्व णिणाशिदो। भोदु एव्वं दाव ॥ प्रकाशं॥ अहो अधिअलणभोइआ, णं भणामि, मए जेव्व दिट्ठा; किं कोलाहलं कलेध (३) ॥ इति पादेन लिखनं प्रोञ्छन्ति॥

---

(१) अधिकरणभोजकाः, किमिति न जानामि तां तादृशीं नगरमण्डनं काञ्चनशतभूषणां। केनापि कुपुत्रेण अर्थकल्य, वर्त्तस्य कारणात्, शून्यं पुष्पकरण्डकजीर्णोद्यानं प्रविश्य, वाऊपाशवलात्कारेण वसन्तसेना मारिता, न मया।

(२) यदार्य्यआज्ञापयति। आर्य्य, लिखितं।

(३) विस्मये! त्वरां कुर्व्वाणेनेव पायसपिण्डरकेण, अद्य

आधि। कथं त्वया ज्ञातं यथा खल्वर्थनिमित्तं वाहुपाशेन व्यापादिता?

शकारः। हंहो; णूणं शुणपूणाए मोघठाणाए गीवालिआए णिसुवणकेहिं आहलणट्ठाणेहिं तक्केमि (१)।

श्रेष्ठिकायस्थौ। जुज्जदिविअ (२)।

शकारः ॥ स्वगतं॥ दिट्ठिआ पत्युज्जीविदह्मि, अविदमादिके! (३)

श्रेष्ठिकाय। भो कं एसो ववहारो अवलंवदि? (४)

आधि। इह हि द्विविधोव्यवहारः।

श्रेष्ठिकाय। केरिशो? (५)

आधि। वाक्यानुसारेण, अर्थानुसारेण च। यस्तावद्वा

---

मया आत्मा एव निर्नाशितः। भवत्वेवं तावत्। अहो अधिकरणभोजका, ननु भणामि, मया एव दृष्टा; किं कोलाहलं कुरुत।

(१) हंहो; नूनं मोघस्थानया ग्रीवालिकया निःसुवर्णकैराभरणस्थानैः तर्कयामि।

(२) युज्यतेइव।

(३) दिष्ट्या प्रत्युज्जीवितोऽस्मि।

(४) भो कमेषव्यवहारोऽवलम्बते?

(५) कीदृशो?

व्यानुसारेण, स खल्वर्थिप्रत्यर्थिभ्यः। यस्त्वार्थानुसारेण सचाधिकरणिकबुद्धिनिष्पाद्यः।

श्रेष्ठिकाय। तावसन्तसेणामादरं अवलंवदि ववहारो (१)।

आधि। एवमिदं; भद्र शोधनक, वसन्तसेनामातरमनुद्वेजयन्नाह्वय।

शोधनकः ॥ तथेति ॥ निष्क्रम्य गणिकामात्रा सह प्रविश्य॥

एदु, एदु, अज्जा (२)।

वृद्धा। गदा मे दारिआ मित्तघरअं अत्तणोजोव्वणमणुभविउं; एसो उण दीहाऊ भणादि, आअच्छ, आधिअलणिओ सद्दावेदि; ता मोहपरवसमिव अत्ताणअं अवगच्छामि, हिअअं मे थरहरेदि। अज्ज, आदेसेहि मे अधिअरणमण्डवस्स मग्गं (३)।

शोधनकः। एदु, एदु, अज्जा (४) ॥उभौ परिक्रामतः॥

---

(१) तस्मात् वसन्तसेनामातरमवलम्बते व्यवहारः।

(२) एतु, एतु, आर्य्या।

(३) गता मे दारिका मित्रगृहं आत्मनोयौवनमनुभवितुं; एष पुनर्दीर्घायुर्भणति, आगच्छ, आधिकरणिक आह्वयति; तन्मोहपरवशमिवात्मानमवगच्छामि, हृदयं मे प्रकम्पते। आदिश मह्यं अधिकरणमण्डपस्य मार्गं।

(४) एतु, एतु, आर्य्या।

शोधनकः। एदं अधिअलणमंडवं। एत्थ पविशदु अज्जा (१) ॥ इत्युभौ प्रविशतः॥

वृद्धा ॥ उपसृत्य॥ सुहं तुह्माणं भोदु भावमिस्साणं (२)।

आधि। भद्रे, स्वागतमास्यतां ॥ वृद्धा तथेत्युपविष्टा॥

शकारः॥साक्षेपं॥ आगदासि, वुड्ढकुट्टणि, आगदासि ?(३)

आधि। अये त्वं किल वसन्तसेनाया माता ?

वृद्धा। अधइं? (४)

आधि। अथेदानीं वसन्तसेना क्व गता?

वृद्धा। मित्तघरअं (५)।

आधि। किन्नामधेयं तस्या मित्रं?

वृद्धा ॥ स्वगतं॥ हद्धी, हद्धी, अदिलज्जणीयं क्खु एदं। ॥ प्रकाशं॥ जणस्स पुच्छणीओ अअं अत्थो ण उण आधिअरणिअस्स (६)।

---

(१) एष अधिकरणमण्डपः। अत्र प्रविशत्वार्य्या।

(२) सुखं युष्माकं भवतु भावमिश्राणां।

(३) आगतासि, वृद्धकुट्टनि, आगतासि ?

(४) अथ किं?

(५) मित्रगृहं।

(६) अतिलज्जनीयं खलु इदं। जनप्रच्छनीयोऽयमर्थः न पुनराधिकरणिकस्य।

आधि। अलं लज्जया, व्यवहारस्त्वां पृच्छति।

श्रेष्ठिकाय। ववहारो पुच्छदि, णत्थि दोसो, कधेहि (१)।

वृद्धा। कधं ववहारो जइ, एव्वं, ता सुणंतु अज्जमिस्सा। सो क्खु सत्थवाहविणयदत्तस्स णत्तिओ, साअरदत्तस्स तणओ, सुगिहिदणामहेओ अज्ज चारुदत्तो णाम, सेट्ठिचत्तरे पडिव सदि, तहिं मे दारिआ जोव्वणसुहमणुभवदि (२)।

शकारः। सुदं अज्जेहिं? लिहीयंतु एदे अक्खला, चारुदत्तेण सह मम विवादे (३)।

श्रेष्ठिकाय। चारुदत्तोमित्तोत्ति णत्थि दोसो (४)।

आधि। व्यवहारोऽयं चारुदत्तमवलम्बते।

श्रेष्ठिकाय। एव्वं विअ (५)।

(१) व्यवहारः पृच्छति, नास्ति दोषः, कथय।

(२) कथं व्यवहारोयद्येवं, तदा शृण्वन्तु आर्य्यमिश्राः। स खलु सार्थवाहविनयदत्तस्य नप्ता, सागरदत्तस्य तनयः, सुगृहीतनामधेयः आर्य्यचारुदत्तोनाम, श्रेष्ठिचत्वरे प्रति वसति, तत्र मे दारिका यौवनसुखमनुभवति।

(३) श्रुतमार्य्यैः? लिख्यन्तामेतान्यक्षराणि, चारुदत्तेन सह मम विवादे।

(४) चारुदत्तोमित्रमिति नास्ति दोषः।

(५) एवमिव।

आधि। धनदत्त, वसन्तसेना आर्य्यचारुदत्तस्य गृहं गतेति लिख्यतां; व्यवहारस्य प्रथमः पादः। कथमार्य्यचारुदत्तोऽप्य स्माभिराक्काययितव्यः। अथवा व्यवहारस्तमाक्वयति। भद्र शोधनक, गच्छ। आर्य्यचारुदत्तं स्वैरं असंभ्रान्तमनुद्विग्नं साद रमाक्वय, प्रस्तावेनाधिकरणिकस्त्वां द्रष्टुमिच्छतीति।

शोधनकः। जं अज्जो आणवेदित्ति॥ निष्क्रान्तः, चारुदत्तेन सह प्रविश्य च॥ एदु, एदु, अज्जो (१)।

चारु॥ विचिन्त्य॥ परिज्ञातस्य मे राज्ञा शीलेन, च कुलेन च,

यत्सत्यमिदमाक्कानमवस्थांमभिशङ्कते।

॥ सवितर्कं स्वगतं॥

ज्ञातोनु किं स खलु बन्धनविप्रयुक्तो

मार्गं गतः प्रवहणेन मयापनीतः?

चारेक्षणस्य नृपतेः श्रुतिमागतोवा

येनाहमेवमभियुक्तइव प्रयामि।

अथवा किं विचारितेन। अधिकरणमण्डपमेव गच्छामि। भद्र शोधनक, अधिकरणस्य मार्गमादेशय।

शोधनकः। एदु, एदु, अज्ज (२) ॥इति परिक्रामतः॥

---

(१) यदार्य्यआज्ञापयति। एतु, एतु, आर्य्यः।

(२) एतु, एतु, आर्य्यः।

चारु। ॥ सशङ्कं ॥ तत्किमपरं।

रूक्षस्वरं वाशति वायसोऽयममात्यभृत्या मुहुराह्वयन्ति,
सव्यञ्च नेत्रं स्फुरति, प्रसह्य ममानिमित्तानि हि खेदयन्ति।

शोधनकः। एदु, एदु, अज्जो (१)।

चारु ॥ स्वैरमसम्भ्रान्तं परिक्रम्याग्रतोऽवलोक्य च ॥

शुष्कवृक्षस्थितो ध्वाङ्क्ष आदित्याभिमुखस्तथा;
मयि चोदयते वामं चक्षुर्घोरमसंशयं।

॥ पुनरन्यतोऽवलोक्य ॥ अये कथमयं सर्प्पः।

मयि विनिहितदृष्टिर्भिन्ननीलाञ्जनाभः,
स्फुरितविततजिह्वः, शुक्लदंष्ट्राचतुष्कः,
अभिपतति सरोषोजिह्मिताध्मातकुक्षि
र्भुजगपतिरयं मे मार्गमाक्रम्य सुप्तः।

अपिचेदं। स्खलति चरणं भूमौ न्यस्तं, नचार्द्रतमा मही;
स्फुरति नयनं, वामोबाहुर्मुहुश्च विकम्पते,
शकुनिरपरश्चायं तावद्विरौति हि नैकशः,
कथयति महाघोरं, मृत्युं, नचात्र विचारणा।

सर्व्वथा देवताः स्वस्ति करिष्यन्ति।

शोधनकः। एदु, एदु, अज्जो, इमं अधिअलणमण्डवं पविसदु अज्जो (२)।

---

(१) एतु, एतु, आर्य्यः।

(२) एतु, एतु, आर्य्योऽधिकरणमण्डपं प्रविशत्वार्य्यः।

चारु ॥ प्रविश्य समन्तादवलोक्य ॥ अहो अधिकरण मण्डपस्य परा श्रीः। इह हि।

चिन्तासक्तनिमग्नमन्त्रिसलिलं, दूतोर्म्मिशङ्खाकुलं,
पर्य्यन्तस्थितचारनक्रमकरं, नागाश्वहिंसाश्रयं,
नानावाशककङ्कपक्षिरुचिरं कायस्थसर्पास्पदं,
नीतिक्षुस्ततटञ्च राजकरणं हिंस्रैः समुद्रायते।

भवतु ॥ प्रविशन् शिरोघातमभिनीय सवितर्कं ॥ अहह इदमपरं।

सव्यं मे स्पन्दते चक्षुर्विरौति वायसस्तथा,
पन्थाः सर्पेण रुद्धोऽयं, स्वस्ति चास्मासु दैवतः।

तावत्प्रविशामि ॥ इति प्रविशति ॥

आधि। अयमसौ चारुदत्तो, यएषः,

घोणोन्नतं मुखमपाङ्गविशालनेत्रं,
नैतद्धिभाजनमकारणदूषणानां;
नागेषु, गोषु, तुरगेषु, तथा नरेषु,
नह्याकृतिः सुसदृशं विजहाति वृत्तं।

चारु। भो अधिकृतेभ्यः स्वस्ति। हंहो नियुक्ता अपि कुशलं भवतां।

आधि ॥ ससंभ्रमं ॥ स्वागतमार्य्यस्य; भद्र शोधनक, आर्य्यस्यासनमपनय।

शोधनकः ॥ आसनमुपनीय ॥ एदं आसनं, एत्थ उववि सदु अज्जे (१)।

चारु ॥ उपविशति ॥

शकारः ॥ सक्रोधं ॥ आगदेशि रे इत्थिआघादआ, आग देशि? अहो णाए ववहाले, अहो धम्मे ववहाले, जं एअस्साह इत्थिआघादुकाह आशणे दीअदि सगव्वं; भोदु, णं दोअदु(२)।

आधि। आर्य्य चारुदत्त, अस्ति भवतोऽस्या आर्य्याया दुहित्रा सह प्रसक्तिः प्रणयः प्रीतिर्वा?

चारु। कस्याः।

आधि। अस्याः ॥ इति वसन्तसेनामातरं दर्शयति ॥

चारु ॥ उत्थाय ॥ आर्य्ये, अभिवादये।

वृद्धा। जाद चिरं मे जीव ॥ स्वगतं॥ अअं सो चारु दत्तो; सुणिखित्तं क्खु दारिआए जोव्वणं (३)।

आधि। आर्य्य, गणिका तव मित्रं?

चारु ॥ लज्जां नाटयति ॥

---

(१) इदमासनमत्रोपविशत्वार्य्यः।

(२) आगतोऽसि रे स्त्रीघातक आगतोऽसि? अहोन्यायः व्यवहारः, अहो धर्म्माव्यवहारः, यदेतदन्यस्य स्त्रीघातकस्य आसनं दीयते सगर्व्वां; भवतु, ननु दीयतां।

(३) तात चिरं मे जीव। अयं स चारुदत्तः; सुनिक्षिप्तं खलु दारिकया यौवनं।

शकारः। लज्जाए, आदु भीलुदाए वा, चालित्तं अलिए णिगूहिदुं, सअं इत्थिअं मालिअ अत्यकालणाए णिगूहदि, न तं हि भट्टको (१)।

श्रेष्ठिकाय। अज्ज चारुदत्त, भणाहि; अलं लज्जाए, ववहारो खु एसो (२)।

चारु ॥ सलज्जं॥ भो अधिकृता, मया कथमीदृशं वक्तव्यं। यथा गणिका मम मित्रमिति; अथवा; यौवनमत्रापराध्यति, न चारित्र्यं।

आधि। व्यवहारः सविघ्नोयं, त्यज लज्जां हृदि स्थितां;

ब्रूहि सत्यमलं धैर्य्यं, छलमत्र न गृह्यते।

अलं लज्जया, व्यवहारस्त्वां पृच्छति।

चारु। अधिकृत, केन सह मम व्यवहारः?

शकारः। अले, मए शह ववहालो (३)।

चारु। त्वया सह मम व्यवहारः सुदुस्सहः।

(१) लज्जया, अथवा भीरुतया वा, चारित्रं अलीकं निगूहितं, स्वयं स्त्रीं मारयित्वा अर्थकारणाय निगूहति न तत् भद्रकः।

(२) आर्य्य चारुदत्त, भण; अलं लज्जया, व्यवहारः खल्वेषः।

(३) अरे, मया सह व्यवहारः।

शकारः। अए इत्थिआघादआ, तं तादिशिं लअणश दभूषणियं वशंतसेणिअं मालिअ, संपदं कवडकावडिके भविअ णिगूहेसि (१)।

चारु। असंबद्धः खल्वसि।

आधि। आर्य्य चारुदत्त, अलमनेन; ब्रूहि, सत्यं अपि गणिका तव मित्रं।

चारु। एवमेवं।

आधि। आर्य्य, वसन्तसेना क्व।

चारु। गृहं गता।

श्रेष्ठिकाय। कधं गदा, कदा गदा? गच्छन्ती वा केण अणुगदा? (२)

चारु ॥ स्वगतं॥ किं प्रछन्नं गतेति ब्रवीमि।

श्रेष्ठिकाय। अज्ज कधेहि (३)।

चारु। गृहं गता; किमन्यद्ब्रवीमि।

शकारः। मम केलकं पुप्फकरंडकजिणुज्जाणं पवेशिअ,

(१) अरे स्त्रीघातक; तां तादृशीं रत्नशतभूषणां वसन्तसेनां मारयित्वा, साम्प्रतं कपटकापटिकोभूत्वा निगूहसि।

(२) कथं गता, कदा गता? गच्छन्ती वा केन अनुगता?

(३) आर्य्य कथय।

अत्थणिमित्तं वाऊपाश्रबलक्कालेण मालिदा, अए शंपदं वदशि घलं गदेति (१)।

चारु। आः असंबद्धप्रलापिन्।

अभ्युच्छ्रितोऽसि सलिलैर्नवलाहकानां,
चापाग्रपक्षसदृशं भ्रुममंतराले;
मिथ्यैतदाननमिदं भवतस्तथाहि
हेमन्तपद्ममिव निःप्रभतामुपैति।

आधि ॥ जनान्तिकं ॥

तुलनं चाद्रिराजस्य, समुद्रस्य च तारणं,
ग्रहणं चानिलस्येव, चारुदत्तस्य दूषणं।

॥ प्रकाशं ॥ आर्य्य चारुदत्तः; खल्वसौ कथमिदमकार्य्यं करिष्यति।

शकारः। किं पक्खवादेण ववहाले दीशदि? (२)

आधि। अपेहि मूर्ख।

वेदार्थान् प्राकृतस्त्वं वदसि, न च ते जिह्वा निपतिता?
मध्याह्ने वीक्षसेऽर्कं, न तव सहसा दृष्टिर्विचलिता?

---

(१) मदीयं पुष्पकरण्डकजीर्णोद्यानं प्रवेश्य, अर्थनिमित्तं वाऊपाशबलात्कारेण मारिता, अये साम्प्रतं वदसि गृहं गतेति।

(२) किं पक्षपातेन व्यवहारो दृश्यतां?

दीप्ताग्नौ पाणिमन्तः क्षिपसि, न च ते तन्नुणं दह्यतेऽसौ?
चारित्र्याच्चारुदत्तं चलयसि न ते देहं हरति भूः
आर्य्य चारुदत्तः कथमयमकार्य्यं करिष्यति।

कृत्वा समुद्रमुदकोच्छ्रयमात्रशेषं,
दत्तानि येन हि धनान्यनपेक्षितानि,
स श्रेयसां कथमिवैकनिधिर्महात्मा
पापं करिष्यति धनार्थमवीरजुष्टं?

शकारः। किं पक्खवादेण ववहाले दीसदि? (१)

वृद्धा। हदाश; जो दाणिं णाशीकदं सुवणभंडश्रं रत्तिं चोरेहिं अवहदत्ति, तस्स कालणादो चदुस्समुद्दसारभूदं रश्रणावलिं देदि, सो दाणिं अत्थकल्लवत्तस्स कारणादो, इमं अकज्जं करेदि? हा जादे, एहि मे पुत्ति॥ इति रोदिति॥(२)

अधि। आर्य्य चारुदत्त, किमसौ पद्भ्यां गता उत प्रवहणेनेति।

चारु। ननु मम प्रत्यक्षं न गता, तन्न जाने। किं पद्भ्यां गता उत प्रवहणेनेति।

---

(१) किं पक्षपातेन व्यवहारो दृश्यते।

(२) हताश, यदिदानीं न्यासीकृतं सुवर्णभाण्डं रात्रौ चौरैरपहृतमिति, तस्य कारणात् चतुःसमुद्रसारभूतां रत्नावलीं ददाति, स इदानीं अर्थकल्यवर्त्तस्य कारणात्, इदमकार्य्यं करोति? हा जाते, एहि मे पुत्रीति।

प्रविश्य ॥ सामर्षोवीरकः ॥

पादप्पहारपरिभवविमाणणा वद्धगरुअवेरस्स।
अणुसोअंतस्स इयं कधंपि रत्ती पभादा मे।

ता जाव अधिअरणमण्डवं उवसप्पामि ॥ प्रवेष्टकेन ॥ सुहं अज्जमिस्साणं (१)।

आधि। अये नगररचाधिकृतोवीरकः। वीरक, किमागमनप्रयोजनं?

वीरकः। ही, वंधणभेअणसंभमे अज्जकं अणेसंतो, ओव्वाडिदं पवहणं वच्चदित्ति विआरं करंतो अंणेसतो, अरे तुएवि आलोइदे मएवि आलोइदव्वोत्ति भणंतोजेव्व, चंदणमहत्तलएण पादेण ताडिदोम्हि। एदं सुणिअ अज्जमिस्सा पमाणं (२)।

(१) पादप्रहारपरिभवविमाननाबद्धगुरुकवैरस्य,
अनुशोचतइयं कथमपि रात्रिः प्रभाता मे।
तद्यावदधिकरणमण्डपमुपसर्पामि। शुभमार्य्यमिश्राणां।

(२) ही, विस्मये, बन्धनभेदनसंभ्रमे आर्य्यकमन्वेषयन्, अपवारितं प्रवहणं व्रजतीति विचारं कुर्व्वन् अन्वेषयन्, अरे त्वयापि आलोकितं मयाप्यालोकितव्यमिति भणन्नेव, चन्दन महत्तरकेण पादेन ताडितोऽस्मि। एतच्छ्रुत्वा आर्य्यमिश्राः प्रमाणं।

आधि। भद्र, जानीषे कस्यतत्प्रवहणमिति।

वीरकः। इमस्स अज्जचारुदत्तस्स, वसंतसेणा आउढा, पुष्फकरंडकजिण्णुज्जाणं कीलिदुं णीअदित्ति पवहणवाहएण कहिदं (१)।

शकारः। पुणोवि सुदं अज्जेहिं (२)।

आधि। एष भो निर्म्मलज्योत्स्नोराहुणा ग्रस्यते शशी,

जलं कूलावपातेन प्रसन्नं कलुषायते॥

वीरक, पश्चादिह भवतोन्यायं द्रक्ष्यामः। यएष अधिकरणे द्वार्यश्वस्तिष्ठति, तमेनमारुह्य, गत्वा पुष्पकरंडकोद्यानं, दृश्यतां; अस्ति तत्र काचिद्विपन्ना स्त्री न वेति।

वीरकः। जं अज्जो आणवेदि॥ इति निष्क्रान्तः॥ प्रविश्य च॥ गदोम्हि तहिं, दिट्ठं च मए इत्तिआकलेवरं सावदेहिं, विलुप्पं (३)।

श्रेष्ठिकाय। कधं तुए जाणिदं इत्थिआकलेवरत्ति (४)।

---

(१) अस्य चारुदत्तस्य, वसन्तसेना आरूढा, पुष्पकरण्डकजीर्णोद्यानं क्रीडितुं नीयते, इति प्रवहणवाहकेन कथितं।

(२) पुनरपि श्रुतमार्य्यैः।

(३) यदार्य्यआज्ञापयति। गतोऽस्मि तत्र, दृष्टञ्च मया स्त्रीकलेवरं श्वापदैर्विलुप्तं।

(४) कथं त्वया ज्ञातं स्त्रीकलेवरमिति।

वीरकः। सावसेसेहिं केसहत्थपाणिपादएहिं उवलक्खिदं मए (१)।

आधि। अहो धिग्वैषम्यं लोकव्यवहारस्य।

यथा यथेदं निपुणं विचार्य्यते, तथा तथा सङ्कटमेव दृश्यते;
अहो सुसन्ना व्यवहारनीतयोमतिस्तु, गौः पङ्कगतेव सीदति।

चारु ॥ स्वगतं॥

यथैव पुष्पं प्रथमे विकाशे समेत्य पातुं मधुपाः पतन्ति,
एवं मनुष्यस्य विपत्तिकाले छिद्रेष्वनर्थाबहुलीभवन्ति।

आधि। आर्य्य चारुदत्त, सत्यमभिधीयतां।

चारु। दुष्टात्मा परगुणमत्सरीमनुष्यो
रागान्धः परमिह हन्तुकामबुद्धिः,
किं योयद्वदति, मृषैव जातिदोषा
त्तद्ग्राह्यं भवति, न तद्विचारणीयं। |21|

अपिच। योऽहं लतां कुसुमितामपि पुष्पहेतो
राकृष्य नैव कुसुमावचयं करोमि,
सोऽहं कथं भ्रमरपक्षरुचौ सुदीर्घे
केशे प्रगृह्य रुदतीं प्रमदां निहन्मि। |22|

शकारः। हंहो, अधिअलणभोदआ; किं तुम्हे पक्खवादेण

(१) सावशेषैः केशहस्तपाणिपादैरुपलक्षितं।

ववहालं, पेक्खध, जेण अज्जवि एशे हदाशचारुदत्ते आशणे धालीअदि (१)।

आधि। भद्र शोधनक। एवं क्रियतां॥ शोधनः तथाकरोति॥

चारु। विचार्य्यतां, भो अधिकृता, विचार्य्यताम् ॥ इति, आसनादवतीर्य्य भूमौ उपविशति ॥

शकारः ॥ स्वगतं; सहर्षं नर्त्तित्वा॥ ही; अणेण मए कडे पावे अण्णश्श मत्थके निवडिदे; ता जहिं चालुदत्ताके उवविशदि तहिं हगे उववि शामि ॥ तथा कृत्वा ॥ चारुदत्ता, पेक्ख, पेक्ख मं; ता भण, भण, मए मालिदेत्ति (२)।

चारु। भो अधिकृता ॥ दुष्टात्मेति पूर्व्वोक्तं पठति॥ सनिश्वासं स्वगतं॥

मैत्रेय, भोः किमिदमद्य ममोपघातो!
हा ब्राह्मणि द्विजकुले विमले प्रसूता!
हा रोहसेन नहि पश्यसि मे विपत्तिं!
मिथ्यैव नन्दसि परव्यसनेन नित्यं।

---

(१) हंहो, अधिकरणभोजकाः; किं यूयं पक्षपातेन व्यवहारं, पश्यत, येनाद्यापि एषहताशचारुदत्तआसने धार्य्यते।

(२) अनेन मया कृतं पापं अन्यस्य मस्तके निपतितं, तत् यत्र चारुदत्तउपविशति तत्राहं उपविशामि। चारुदत्त, पश्य, पश्य मां; तत् भण, भण, मया मारितादृति।

प्रेषितश्च मया तद्वार्त्तान्वेषणाय मैत्रेयो वसन्तसेनासकाशं, शकटिकानिमित्तञ्च तस्य प्रदत्तान्यलङ्करणानि प्रत्यर्पयितुं; तत्कथं चिरयते ॥ ततः प्रविशति गृहीताभरणो विदूषकः ॥

विदू। पेसिदोम्हि अज्ज चारुदत्तेण वसन्तसेणासआसं; तहिं अलङ्करणाइं गेह्निअ, जधा अज्ज मित्तेअ, वसन्तसेणाए वच्छो रोहसेणो अलंकारेण अलंकरिअ, जणणीसआसं पेसिदो, इमस्स आहरणं दादव्वं ण उण गह्निदव्वं, ता समप्पेहित्ति। ता जाव वसन्तसेणासआसं जेव्व गच्छामि ॥ परिक्रम्यावलोक्य च आकाशे ॥ कधं भाव रेभिलः। भो भाव रेभिल, किंनिमित्तं तुमं उव्विग्गो उव्विग्गो विअ लक्खीअसि ॥ आकर्ण्य ॥ किं भणासि? पिअवअस्सो चारुदत्तो अधिअरणमण्डवं सद्दाविदोत्ति, ता णडु अप्पेण कज्जेण होदव्वं ॥ विचिन्त्य ॥ ता पच्छा वसन्तसेणासआसङ्गमिस्सं; अधिअरणमण्डवं दाव गमिस्सं ॥ परिक्रम्यावलोक्य च ॥ इदं अधिअरणमण्डवं, ता जाव पविसामि ॥ प्रविश्य ॥ सुहं अधिअरणभोइआणं; कहिं मम पिअवअस्सो? (१)

---

(१) प्रेषितोऽस्मि आर्य्यचारुदत्तेन वसन्तसेनासकाशं; तत्रालङ्करणानि गृहीत्वा, यथा आर्य्यमैत्रेयो, वसन्तसेनाया वत्सो रोहसेनः अलङ्कारेणालङ्कृत्य, जननीसकाशं प्रेषितः, अस्याभरणं दातव्यं, न पुनर्गृहीतव्यं, तत्समर्पयेति। यावत्

आधि। नन्वेष तिष्ठति।

विदू। वअस्स सोत्थि दे (१)।

चारु। भविष्यति।

विदू। अवि क्खेमन्दे (२)।

चारु। एतदपि भविष्यति।

विदू। भो वयस्स, किं णिमित्तं उव्विग्गो उव्विग्गो विअ लक्खीअसि। कुदो वा सद्दाइदो (३)।

चारु। वयस्य।

मया खलु नृशंसेन परलोकमजानता,
स्त्रीरतिर्व्वाविशेषेण; शेषमेषोऽभिधास्यति

---

वसन्तसेनासकाशमेव गच्छामि। कथं भाव रेभिलः भो, भाव रेभिल, किं निमित्तं त्वमुद्विग्न इव लक्ष्यसे। किं भणसि? प्रियवयस्यश्चारुदत्तः अधिकरणमण्डपं शब्दायते, इति; तत् न खलु अल्पेन कार्य्येण भवितव्यं। तत्पश्चात् वसन्तसेनासकाशं गमिष्यामि, अधिकरणमण्डपं तावत् गमिष्यामि। अयमधिकरणमण्डपः; तत् यावत् प्रविशामि। सुखं अधिकरणभोजकानां, कुत्र मम प्रियवयस्यः?

(१) वयस्य स्वस्ति ते।

(२) अपि क्षेमं ते।

(३) भो वयस्य, किं निमित्तं उद्विग्नः उद्विग्न इव लक्ष्यसे, कुतो वा आहूतः?

विदू। किं किं?

चारु ॥ कर्णे ॥ एवमेवं।

विदू। को एव्वं भणादि? (१)

चारु ॥ संज्ञया शकारं दर्शयति ॥ नन्वेष तपस्वी हेतुभूतः कृतान्तोमां व्याहरति।

विदू ॥ जनान्तिकं ॥ एव्वं, कीस ण भणीअदि गेहं गदत्ति? (२)

चारु। उच्यमानमपि अवस्थादोषान्न गृह्यते।

विदू। भो भो अज्जा; जेन दाव पुरत्तावणविहारारामदेउलतडागकूवजूवेहिं अलङ्किदा णअरी ऊज्जअणी, सो अणेसो अत्यकल्लवत्तकारणदो ईदिसं अकज्जं अणुचिट्ठदित्ति? ॥ सक्रोधं ॥ अरे रे काणेलीसुदा, राअसालसंठानआ, दुस्सीखणआकिदजणदोसमण्डआ, वऊसुवणमण्डिदमक्कडअ! भण भण मम अग्गदो, जो दाणिं मम पिअवअस्सो कुसुमिदं माधवीलदं पिआअन्विअ कुसुमावचयं ण करेदि, कदावि आअधत्ताए पल्लवच्छेऊ भोदित्ति; सो कधं एरिसं अकज्जं उहअ लोअविरुद्धं करेदि? चिट्ठ रे कुट्टणिउत्ता, जाव एदिणा तव हिअअकुडिलेण दण्डअट्ठेण मत्यअं दे सदखण्डं करेमि (३)।

---

(१) क एवं भणति?

(२) एवं, किमर्थं न भण्यते गृहं गतेति।

(३) भो भो आर्य्याः; येन तावत् पुरस्थापनविहारा

शकारः ॥ सक्रोधं॥ सुणंतु सुणंतु अज्जमिस्सा। चारुदत्ताकेण शह मम विवादे, ववहाले वा, ता कीश एशे कीकपदशीशमस्तकादुःबटुका मम शिले शदखण्डे कलेदि। मा दाव ले दाशीएउत्ता, दुट्ठवटुका (१)।

विदू ॥ दण्डकाष्ठमुद्यम्य पूर्व्वोक्तं पठति ॥

शकारः ॥ सक्रोधमुत्थाय ताडयति ॥

विदू ॥ प्रतीपं ताडयति। अन्योन्यं ताडयतः विदूषकस्य कक्षादेशादाभरणानि पतन्ति ॥

रामदेवालयतडागकूपयूपैरलङ्कृता नगरी उज्जयिनी, सः अनीशः अर्थकल्यवर्त्तकारणात् ईदृशमकार्य्यं अनुतिष्ठतीति? अरे रे कुलटापुत्र, राजश्यालक, संस्थानक, दुःशङ्कन कृतजन दोषभाण्ड, वज्रसुवर्णमण्डितमर्कटक; भण, भण, ममाग्रतः यदिदानीं मम प्रियवयस्यः कुसुमितां माधवीलतामप्याकृष्य कुसुमावचयं न करोति, आकृष्टतया पल्लवच्छेदो भवतीति, सकथमीदृशमकार्य्यमुभयलोकविरुद्धं करोति! तिष्ठ रे कुट्टिनीपुत्र, यावदेतेन तव हृदयकुटिलेन दण्डकाष्ठेन मस्तकं ते शतखण्डं करोमि।

(१) शृण्वन्तु शृण्वन्तु आर्य्यमिश्राः; चारुदत्तेन सह मम विवादे, व्यवहारे वा, किमर्थमेष काकपदशीर्षमस्तकः दुष्टवटुकः मम शिरः शतखण्डं करोति! मा तावत्, रे दास्याः पुत्र, दुष्टवटुक।

शकारः ॥ तानि गृहीत्वा हृष्टा सशाध्वसं॥ पेक्खन्तु,पेक्खन्तु अज्जा; एदे खु ताए तवस्सिए केलका अलङ्कारा ॥ चारुदत्त मुद्दिश्य॥ इमश्श अत्थकल्लवत्तस्स कालणाए एशा मालिदा वावादिदा अ (१)।

॥ अधिकृताः सर्व्वे अधोमुखाः स्थिताः ॥

चारु ॥ जनान्तिकं ॥

अयमेवंविधे काले दृष्टोभूषणविस्तरः,
अस्माकं भाग्यवैषम्यात्पतितः पातयिष्यति।

विदू। भो कीस भूदत्थं ण णिवेदीयदि? (२)

चारु। वयस्य।

दुर्ब्बलं नृपतेश्चक्षुर्नैतत्तत्वं निरीक्षते,
केवलं वदतोदैन्यमश्लाघ्यं मरणं भवेत्।

अधि। कष्टं भोः कष्टं।

अङ्गारकविरुद्धस्य प्रक्षीणस्य बृहस्पतेः,
ग्रहोऽयमपरः पार्श्वे धूमकेतुरिवोत्थितः।

---

(१) पश्यन्तु, पश्यन्तु आर्य्याः; एते खलु तस्यास्तपस्विन्या अलङ्काराः। अस्य अर्थकल्यवर्त्तस्य कारणाय एषा मारिता व्यापादिता च।

(२) भोः किमर्थं भूतार्थोन निवेद्यते।

श्रेष्ठिकाय ॥ विलोक्य वसन्तसेनामातरमुद्दिश्य॥ अवहिदा दाव अज्जा, एदं सुवस्तभण्डअं अवलोअदु; सो जेव्व एसो णवेत्ति (१)।

वृद्धा॥ अवलोक्य॥ सरिसोएसो, एसो ण उण सो (२)।

शकारः। आं वुड्ढकुट्टणि, अक्खीहिं मन्तिदं वाआए मूकिदं (३)।

वृद्धा। हदास, अवेहि (४)।

श्रेष्ठिकाय। अप्पमत्तं कधेहि; सो जेव्व एसो ण वेत्ति (५)।

वृद्धा। अज्ज, सिप्पिकुसलदाए आवंधे दिट्ठिं; ण उन सो (६)।

आधि। भद्रे, अपि जानास्येतान्याभरणानि।

---

(१) अवहिता तावदार्य्या, इदं सुवर्णभाण्डं अवलोकयतु; तदेवेदं नवेति।

(२) सदृशएष, एष न पुनः सः।

(३) वृद्धकुट्टिनि, अक्षिभ्यां मन्त्रितं वाचा मूकितं।

(४) हताश, अपेहि।

(५) अप्रमत्तं कथय; सएव एष न वेति।

(६) आर्य्य, शिल्पिकुशलतया अवबध्नाति दृष्टिं; न पुनः सः।

दृट्ठा। णं भणामि। णक्खु अण्णदो; अहवा कदावि, केणावि सिप्पिणा घट्टिदा भवे (१)।

आधि। पश्य श्रेष्ठिन्।

वस्त्वन्तराणि सदृशानि भवन्ति नूनं,
रूपस्य भूषणगुणस्य च कृत्रिमस्य,
दृष्ट्वा क्रियामनुकरोति हि शिल्पवर्गः
सादृश्यमेव कृतहस्ततया च दृष्टं।

श्रेष्ठिकाय। अज्ज चारुदत्तस्स केरकाणि एदाणि (२)।

चारु। न खलु, न खलु।

श्रेष्ठिकाय। ता कस्स? (३)

चारु। इहाऽत्रभवत्यादुहितुः।

श्रेष्ठिकाय। कधं एदाइं ताए विओअं गदाइं? (४)

चारु। एवं गतानि, ओं इदं।

श्रेष्ठिकाय। अज्ज चारुदत्त, एत्थ सच्चं वत्तव्वं। पेक्ख,

(१) ननु भणामि। न खलु अन्यतः; अथवा, कदापि शिल्पिना घटितोभवेत्।

(२) आर्य्य चारुदत्तीयान्येतानि।

(३) तदा कस्य?

(४) कथमेतानि तस्या वियोगं गतानि?

पेक्ख, सच्चेण सुहं खु लब्भइ, सच्चालावे ण होइ पावं; सच्चति वे वि अक्खला, मा सच्चं अलिएण गुहेहि (१)।

चारु। आभरणान्याभरणानीति न जाने; किं त्वस्मद्गृहादानीतानीति जाने।

शकारः। उज्जाणं पवेशिअ पठमं मालेशि, कवड़कावड़िआए संपदं णिगूहेशि (२)।

आधि। आर्य्य चारुदत्त, सत्यमभिधीयतां।

इदानीं सुकुमारेऽस्मिन् निःशङ्कं कर्कशाः कशाः,
तव गात्रे पतिष्यन्ति सहास्माकं मनोरथैः। ।२८

चारु। अपापानां कुले जाते मयि पापं न विद्यते,
यदि सम्भाव्यते पापं, अपापेन च किं मया।

स्वगतं॥ नच मे वसन्तसेनाविरहितस्य जीवितेन कृत्यं। प्रकाशं॥ भोः किं वहुना?

मया किल नृशंसेन लोकद्वयमजानता,
स्त्रीरतिस्तु विशेषेण शेषमेषोऽभिधास्यति।

(१) आर्य्य चारुदत्त, अत्र सत्यं वक्तव्यं। पश्य, पश्य, सत्येन सुखं खलु लभ्यते सत्यालापे न भवति पातकं, सत्यमिति द्वे अक्षरे, मा सत्यं अलीकेन गूहय।

(२) उद्यानं प्रवेश्य प्रथमं मारयसि, कपटकापटिकतया साम्प्रतं निगूहसि।

शकारः। वावादिदा; अले तुमंपि भण, मए वावादिदेत्ति (१)।

चारु। त्वयैवोक्तं।

शकारः। शुणेध, शुणेध, भट्टालका; एदेण मालिदा। एदेण जेव्व शंशए छिखे एदश्श दलिद्दचारुदत्ताह शालीले दण्डे धालीअदु (२)।

अधि। शोधनक यथाह राष्ट्रियः। भो राजपुरुषा गृह्यतामयं चारुदत्तः ॥ राजपुरुषा गृह्णन्ति ॥

वृद्धा। पसीदन्तु पसीदन्तु अज्जमिस्सा; जो दाव चोरेहिं अवहृदस्स ॥ इत्यादि पूर्व्वोक्तं पठति॥ ता जदि वावादिदा मम दारिआ, वावादिदा; जीवदु मे दीहाऊ। अणंच। अत्थिपच्चत्थिणं ववहारो; णअ अहं अत्थिणी; ता मुंचध एदं (३)।

---

(१) व्यापादिता; अरे त्वमपि भण, मया व्यापादितेति।

(२) शृणुत, शृणुत, भट्टारका; एतेन मारिता। एतेनैव संशये च्छिन्ने एतस्य दरिद्रचारुदत्तस्य शरीरे दण्डो धार्य्यतां।

(३) प्रसीदन्तु प्रसीदन्तु आर्य्यमिश्राः; यस्तावत् चौरैरपहृतस्य। तदा यदि व्यापादिता मम दारिका, व्यापादिता; जीवतु मे दीर्घायुः। अन्यच्च। अर्थिप्रत्यर्थिनोर्व्यवहारः नचाहमर्थिनी; तत् मुच्यतेनं।

शकारः। अवेहि गब्भदाशि; गच्छ; किं तव एदिणा? (१)

आधि। आर्य्यै गम्यतां। हे राजपुरुषा निष्क्रामयतैनं।

वृद्धा। हा जाद, हा पुत्तअ॥ इति रुदती निष्क्रान्ता॥ (२)

शकारः॥ स्वगतं॥ कडं मए एदस्स अत्तणो सलिसं; संपदं गछामि (३)॥ निष्क्रान्तः॥

आधि। आर्य्य चारुदत्त; निर्णये वयं प्रमाणं; शेषे तु राजा; तथापि शोधनक विज्ञाप्यतां राजा पालकः।

अयं हि पातकी विप्रो, न बध्योमनुरब्रवीत्;
राष्ट्रादस्मात्तु निर्व्वास्योविभवैरचतैः सह।

शोधनक। जं अज्जो आणवेदि ॥ इति निष्क्रम्य पुनः प्रविश्य, सास्रं॥ अज्जा, गदम्हि। तहिं लाओ पालओ भणादि, जेण अत्थकल्लवत्तस्स कारणादो वसन्तसेणा वावादिदा, तं तहिं जेव्व आहलणाइ गले बंधिअ, डिंडिअ दक्खिणमसाणं णइअ, शूले भज्जंधत्ति। जो कावि अवरो एरिसमकज्जमणुचिट्ठदि सो एदिणा सणिआरदण्डेण सासिअदि (४)।

---

(१) अपेहि गर्भदासि, गच्छ; किं तवैतेन।

(२) हा तात, हा पुत्रक।

(३) कृतं मयैतस्य आत्मनः सदृशं, साम्प्रतं गच्छामीति।

(४) यदार्य्य आज्ञापयति। आर्य्या, गतोऽस्मि; तत् राजा पालकोभणति, येन अर्थकल्यवर्त्तस्य कारणात् वसन्तसेना

चारु। अहो अविवेकोविमृश्यकारी राजा पालकः।

अथवा। ईदृशे व्यवहाराग्नौ मन्त्रिभिः परिपातिताः,

स्थाने खलु महीपाला गच्छन्ति कृपणां श्रियं।

अपिच। ईदृशैः श्वेतकाकोयैः राज्ञः शासनदूषकैः,

अपापानां सहस्राणि हन्यन्ते च हतानि च।

सखे मैत्रेय गच्छ मद्वचनादम्बामपश्चिममभिवादयस्व। पुत्रञ्च मे रोहसेनं परिपालयस्व।

विदू। मूले छिन्ने कुदो पादवस्स पालणं (१)।

चारु। मामैवं

नृणां लोकान्तरस्थानां देहप्रतिकृतिः सुतः;

मयि योयस्तव स्नेहोरोहसेने स युज्यतां।

विदू। भो वअस्स, अहन्ते पिअवअस्सोभविअ, तुए विरहिदं पाणाइं धारेमि? (२)

---

व्यापादिता, तं तत्रैव आभरणानि गले बद्धा, डिण्डिमं ताडयित्वा, दक्षिणश्मशानं नीत्वा, शूले भञ्जत। इति यः कोऽप्यपरईदृशमकार्य्यमनुतिष्ठति, स एतेन निकारदण्डेन शास्यते।

(१) मूले च्छिन्ने, कुतः पादपस्य पालनं?

(२) भो वयस्य, अहं ते प्रियवयस्यो भूत्वा, त्वया विरहितान् प्राणान् धारयामि?

चारु। रोहसेनमपि तावद्दर्शय।

विदू। एव्वं जुज्जदि (१)।

आधि। भद्र शोधनक, अपसार्य्यतामयं वालकः ॥ शोधनस्तथा करोति॥

आधि। कः कोऽत्र भो चाण्डालानां दीयतामादेशः।

॥ इति चारुदत्तं विसर्ज्य निष्क्रान्ताः सर्व्वे राजपुरुषाः॥

शोधनकः। इदो आअच्छदु अज्जो (२)।

चारु ॥ सकरुणं॥ मैत्रेय, योऽयमेवं विधे काले इत्यादि पठति॥ आकाशे॥

विषसलिलतुलाग्निप्रार्थिते मे विचारे,
क्रकचमिह शरीरे वीक्ष्य दातव्यमद्य;
अथ रिपुवचनाद्वा ब्राह्मणं मां निहंसि,
पतसि नरकमध्ये पुत्रपौत्रैः समेतः।

अयमागतोऽस्मीति॥ निष्क्रान्ताः सर्व्वे॥

व्यवहारोनाम नवमोऽङ्कः समाप्तः।

---

(१) एवं युज्यते।

(२) इत आगच्छतु आर्य्यः।

# अथ दशमाङ्कः।

---

ततः प्रविशति चाण्डालद्वयेनानुगम्यमानश्चारुदत्तः।

उभौ। तक्किं ण कलअद कालण णववहबन्धणअणे णिउणा,

अइलेण शीशच्छेअणशूलालोवेसु कुशल म्ह,

ओशलध, अज्जा, ओशलध। एशे अज्जचारुदत्ते दिस्स

कलवीलदामे गहिदे, अम्हेहिं वज्झपुलिशेहिं, दीवेजेव्व मन्द

णेहे थोअं थोअं खअं जाइ (१)।

चारु। ॥ सविषादं॥

नयनसलिलसिक्तं पांशुरुक्षीकृताङ्गं,

पितृवनसुमनोभिर्व्वेष्टितं मे शरीरं;

विरसमिह रटन्तो रक्तगन्धानुलिप्तं,

बलिमिव परिभोक्तुं वायसास्तर्कयन्ति। (१)

(१) तत्किं न कलयत कारणं नववधबन्धनगणे निपुणाः

अचिरेण शीर्षच्छेदनशूलारोपेषु कुशलौ स्वः।

अपसरत, आर्य्या, अपसरत। एष आर्य्यचारुदत्तः दत्त

करवीरदामा गृहीतः, आवाभ्यां वध्यपुरुषाभ्यां, दीपइव

मन्दस्नेहकः स्तोकं स्तोकं क्षयं याति।

चाण्डालौ। ओशलध, अज्जा, ओशलध। किं पेक्खध? छिज्जंत्तं शप्पुलिशं कालपलशुधालाहिं, शुअणशउणाधिवाशं शज्जणपुलिशद्दुमं एदं। आअच्छ, ले चालुदत्ता, आअच्छ(१)।

चारु। पुरुषभाग्यानामविचिन्त्याः खलु व्यापाराः यदहमीदृशीं दशामनुप्राप्तः।

सर्व्वगात्रेषु विन्यस्तैरक्तचन्दनहस्तकैः,
पिष्टचूर्णावकीर्णश्च, पुरुषोऽहं पशूकृतः।

॥ अग्रतोनिरूप्य ॥ अहोतारतम्यं नराणां ॥ सकरुणं ॥

अमी हि दृष्ट्वा मदुपेतमेतन्मर्त्त्यं धिगस्त्वित्युपजातबाष्पाः,
अशक्नुवन्तः परिरक्षितुं मां, स्वर्गं लभस्वेति वदन्ति पौराः।

चाण्डालौ। ओशलध, अज्जा, ओशलध, किं पेक्खध?
इंदे पवाहिअंते, गोप्पशवे, शंकमे च तालाणं,
शुप्पुलिशपाणविपत्ती, चत्तालि इमे ण दट्ठव्वा (२)।

---

(१) अपसरत, आर्य्या, अपसरत। किं पश्यत? छिद्यमानं सत्पुरुषं कालपरशुधाराभिः, सुजनशकुनाधिवासं सज्जनपुरुषद्रुममेतं। आगच्छ, रे चारुदत्त, आगच्छ।

(२) अपसरत, आर्य्या, अपसरत, किं पश्यत?
इन्द्रः प्रवाह्यमाणो, गोप्रसवः, संक्रमश्च ताराणां,
सुपुरुषप्राणविपत्तिश्चत्वारइमे न द्रष्टव्याः।

एकः। हण्डे, आहींता; पेक्ख, पेक्ख।

णअली पधाणभूओअत्ते कदन्तआणाए,

किं, लुअदि अन्तलिक्खे? आदु अणब्भे पडदि वज्जे? (१)

द्वितीयः। अले, गोहा।

णअ लुअदि अन्तलिक्खे, णेअ अणब्भे पडदि वज्जे,

महिलासमूहमेहे निवडइ णअणंवुधाराहिं।

॥ अविअ ॥

वज्झम्मि णीअमाणे जणस्स सव्वस्स लोदमाणस्स,

णअणसलिलेहिं सित्ते लक्कादो ण उणमइ लेणु (२)।

चारु ॥ निरूप्य सकरुणं ॥

एताः पुनर्हर्म्यगताः स्त्रियोमां वातायनार्द्धेन विनिःसृतास्याः,

हा चारुदत्ते त्यभिभाषमाणा, वाष्पं प्रणालीभिरिवोत्सृजन्ति।

---

(१) अरे, आहीन्ता; पश्य, पश्य।

नगरी प्रधानभूते वध्यमाने कृतान्ताज्ञया,

किं रोदिति अन्तरीचं? अथवा अनभ्रं पतति वज्रं?

(२) अरे गोहा।

नच रोदिति अन्तरीचं, नैव अनभ्रं पतति वज्रं,

महिलासमूहमेघे निपतति नयनाम्बुधाराभिः।

॥ अपिच ॥

वध्ये नीयमाने जनस्य सर्व्वस्य रुदतः,

नयनसलिलसिक्तो रथ्यातोन उन्नमति रेणुः।

चाण्डालौ। आअच्छ, ले चालुदत्ता, आअच्छ; इमं घोषण ठ्ठाणं। आहणेध डिंडिमं, घोसेध घोसणं (१)।

उभौ। शुणाध, अज्जा, शुणाध; एशे शत्थवाहविणअ दत्तश्श णत्तिके शाअरदत्तश्श पुत्तके, अज्जचालुदत्ते णाम; एदिणा किल अकज्जकालिणा, गणिआ वसन्तसेना अत्थकल्ल वत्तश्श कालणादो, शुण्णं पुप्फकलण्डअजिण्णुज्जाणं पवेशिअ, बाहुपाशबलक्कालेण मालिअत्ति, एशे शलोत्ति गहिदे शअं अ पडिवण्णे; तदो लण्णा पालएण अम्हे आणत्ता, एदं मालेदुं। जदि अवले ईदिशे उभअलोअविलुद्धं अकज्जं कलेदि, तंपि लाआ पालए एवंज्जेव्व शाशदि (२)।

चारु ॥ सनिर्व्वेदं स्वगतं ॥

---

(१) आगच्छ, रे चारुदत्त, आगच्छ; इदं घोषणास्थानं। आहत डिण्डिमं, घोषयत घोषणं।

(२) शृणुत, आर्य्याः, शृणुत; एष सार्थवाहविनयदत्तस्य नप्ता, सागरदत्तस्य पुत्रकः, आर्य्य चारुदत्तोनाम; एतेन किला कार्य्यकारिणा, गणिका वसन्तसेना अर्थकल्यवर्त्तस्य कारणात्, शून्यं पुष्पकरण्डकजीर्णोद्यानं प्रवेश्य, बाहुपाशबलात्कारेण मारितेति, एतत्तस्तोप्त्रं गृहीतं स्वयञ्च प्रतिपन्नः; तदा राज्ञा पालकेन वयमाज्ञप्ता एतं मारयितुं। यद्यपरईद्दशमुभयलोकविरुद्धमकार्य्यं करोति, तमपि राजा पालक एवमेव शास्ति।

मखशतपरिपूतं गोत्रमुद्भासितं मे,
सदसि निबिडचैत्यब्रह्मघोषैः परस्तात्;
मम मरणदशायां वर्त्तमानस्य पापै
स्तदसदृशमनुष्यैर्घुष्यते घोषणायां।

॥ उद्वीक्ष्य कर्णौ पिधाय ॥ प्रिये वसन्तसेने।

शशिविमलमयूखशुभ्रदन्ति,
सुरुचिरविद्रुमसन्निभाधरौष्ठि,
तव वदनभवामृतं निपीय,
कथमवशो ह्ययशोविषं पिबामि।

उभौ। ओशलध, अज्जा, ओशलध।

एश गुणलअणणिही, सज्जनदुक्खाणाउत्तलणसेदू,
असुवस्समण्डणअं अवणीअदि अज्ज णअलीदो।

॥ अणंच ॥

सव्वे क्खु होइ लोए लोए सुह संथिदाणं तन्तिल्ला,
विणिवडिदाणं णलाणं पिअआली दुल्लहो होदि (१)।

---

(१) अपसरत, आर्य्या, अपसरत।
एष गुणरत्ननिधिः, सज्जनदुःखानामुत्तरणसेतुः,
असुवर्णमण्डनकं अपनीयतेऽद्य नगरीतः।

॥ अन्यच्च ॥

सर्व्वः खलु भवति लोके लोकः सुखसंस्थितानां चिन्तायुक्तः,
विनिपतितानां नराणां प्रियकारी दुर्लभो भवति।

चारु ॥ सर्व्वतोऽवलोक्य ॥

अमी हि वस्त्रान्तरुद्धवक्त्राः
प्रयान्ति मे दूरतरं वयस्याः;
परोऽपि बन्धुस्समसंस्थितस्य
मित्रं न कश्चिद्विषमस्थितस्य।

चाण्डालौ। ओशलणं कदं विवत्तं लाअमग्गं; ताआणेध एदं दिसवज्भचिह्नं (१)।

चारु ॥ निःश्वस्य ॥ मैत्रेय, भोः किमिदमित्यादिपठति ॥

नेपथ्ये। हा तात, हा पिअवअस्स (२)।

चारु ॥ आकर्ण्य सकरुणं ॥ भोः स्वजातिमहत्तरद्रक्ष्याम्यहं भवतस्तकाशात्प्रतिग्रहं कर्त्तुं।

चाण्डालौ। किं अम्हाणं हत्यादो पडिग्गहं कलेशि (३)।

चारु। शान्तं पापं; नापरीक्षितकारी दुराचारः पालक इव चाण्डालः; तत्परलोकार्थं पुत्रमुखं द्रष्टुमभ्यर्थये।

चाण्डालौ। एव्वं करीअदु (४)।

---

(१) अपसारणं कृतं विविक्तो राजमार्गः; तदा नयतैनं दत्तवध्यचिह्नं।

(२) हा तात हा प्रियवयस्य।

(३) किमस्माकं हस्तात् प्रतिग्रहं करोषि।

(४) एवं क्रियतां।

नेपथ्ये। हा ताद, हा आवुक! (१)

चारु ॥ श्रुत्वा सकरुणं ॥ भोः स्वजातीत्यादि पठति ॥

चाण्डालौ। अले पउला, खणं अन्तलं देध्व, एशे अज्ज चारुदत्ते पुत्तमुखं पेक्खदु ॥ नेपथ्याभिमुखं॥ अज्ज दूदो आअच्छ, ले दालआ आअच्छ (२) ॥ ततः प्रविशति दारकमादाय विदूषकः॥

विदू। तुवरदु, तुवरदु, भद्दमुहो; पिदा दे मारिदुं णीअदि (३)।

दारकः। हा आवुक, हा ताद! (४)

विदू। हा पिअवअस्स, कहिं मये तुमं पेक्खिदव्वो (५)।

चारु ॥ पुत्रं मित्रं च वीक्ष्य ॥ हा पुत्र, हा मैत्रेय॥ सकरुणं॥ भोः कष्टं।

चिरं खलु भविष्यामि परलोके पिपासितः,
अत्यल्पमिदमस्माकं निवापोदकभोजनं।

(१) हा तात, हा पितः!

(२) हे प्रचुराजनाः, क्षणमन्तरं दत्त, एष आर्य्यचारुदत्तः पुत्रमुखं पश्यतु। आर्य्य दूत आगच्छ, रे दारक आगच्छ।

(३) त्वरतां, त्वरतां, भद्रमुख; पिता ते मारयितुं नीयते।

(४) हा पितः, हा तात!

(५) हा प्रियवयस्य, कुत्र मया त्वं द्रष्टव्यः।

किं पुत्राय प्रयच्छामि ॥ आत्मानमवलोक्य ॥ यज्ञोपवीतं दृष्ट्वा। आ इदं तावदस्ति मम च।

अमौक्तिकमसौवर्णं ब्राह्मणानां विभूषणं,
देवतानां पितृणाञ्च भागोयेन प्रदीयते।

॥ इति यज्ञोपवीतं ददाति॥

चाण्डालः। आ अच्छ, ले चारुदत्ता, आ अच्छ (१)।

द्वितीयः। अले, अज्ज चालुदत्तं णिलुववदेण णामेण आलवेसि। अले पेक्ख।

अभुदये अवसाणे तहअ लत्तिं दिवं अहदमग्गा,
उद्दामेव्व किशोली णिअदी, क्खु पडिचिदुं जादि।

॥ अणं च॥

ग्रुक्खाववदेशा शे किं पणमिअ मत्तएण काअव्वं,
लाऊग्गहिद विअ चंदे ण वन्दणीओ जणपदस्स(२)।

(१) आगच्छ रे चारुदत्त आगच्छ।

(२) अरे, आर्य्य चारुदत्तं निरुपपदेन नाम्नाआलपसि। अरे पश्य।

अभ्युदये अवशाने तथाच रात्रिन्दिवं अहतमार्गा,
उद्दामेव किशोरी नियतिः, खलु परीचितुं याति।

॥ अन्यच्च ॥

ग्रुष्काव्यपदेशाः किमस्य प्रणमितमस्तकेन कर्त्तव्यं,
राहुगृहीतोऽपि च चन्द्रोन वन्दनीयोजनपदस्य।

दारकः। अले, अले चाण्डाला, कहिं आवुकं णेध (१)।

चारु। वत्स।

अंसेन बिभ्रत्करवीरमालां, स्कन्धेन शूलं, हृदयेन शोकं,

आघातमद्याहमनुप्रयामि शामित्रमालब्धमिवाध्वरेऽजः।

चाण्डालः। दालआ;

ण ऊ अम्हे चाण्डाला, चाण्डालउलम्मि जादपुव्वा,

जे अहिभवन्ति साऊं, ते पावा, तेअ चाण्डाला (२)।

दारकः। ता कीस मालेध आवुकं? (३)

चाण्डालः। दीहाओ, अत्त लाअणिओओ क्खु अवलज्झदि, ण ऊ अम्हे (४)।

दारकः॥ वावादेध मं, मुञ्चध आवुकं (५)॥

(१) अरे, अरे चाण्डालाः, कुत्र मम पितरं नयत।

(२) दारक;

न खलु वयं चण्डालाश्चाण्डालकुले जातपूर्व्वाः;

येऽभिभवन्ति साधुं, ते पापास्ते च चाण्डालाः।

(३) तत्कथं मारयत पितरं?

(४) हे दीर्घायुः, अत्र राजनियोगः खलु अपराध्यति, न खलु वयं।

(५) व्यापादयत मां, मुञ्चत पितरं।

चाण्डालः। दीहाऊ एवं भणन्ते, चिरं मे जीव (१)।

चारु ॥ बालं पुत्रं कण्ठे गृहीत्वा ॥

इदं तत्स्नेहसर्व्वस्वं, सममाढ्यदरिद्रयोः,

अचन्दनमनौशीरं, हृदयस्यानुलेपनं।

॥ अंसेन बिभ्रदित्यादि पुनः पठति अवलोक्य स्वगतं ॥

॥ अमी हि वस्त्रान्तनिरुद्धवक्त्रा इत्यादि पुनः पठति ॥

विदू। भो भद्दमुहा, मुंचेध पिअवअस्सं चारुदत्तं, मं वावादेध (२)।

चारु ॥ शांतं पापं इत्वा; स्वगतं॥ अद्यावगच्छामि मम स्थितेत्यादि पठति ॥ प्रकाशं ॥

॥ एताः पुनर्हर्म्यगतास्त्रियोमामित्यादि पुनः पठति ॥

चाण्डालः। ओशलध, अज्जा, ओशलध।

किं प्पेक्खध? शप्पुलिशं अजशवशेण प्पणट्ठजीवाशं,

कूवम्मि क्खुडिदपाशं कंचणकलशं व्व डुव्वन्तं (३)।

चारु ॥ सकरुणं शशिविमलमयूखेत्यादि पठति॥

---

(१) हे दीर्घायुरेवं भणन्, चिरं मे जीव।

(२) भो भद्रमुखा, मुञ्चत प्रियवयस्यं, मां व्यापादयत।

(३) अपसरत आर्य्याः।

किं पश्यत? सत्पुरुषं अयशोवशेन प्रनष्टजीवाशं,

कूपे खण्डितपाशं काञ्चनकलसमिव मज्जन्तं।

अपरः। अले पुणोवि घोसेहि (१)।

चाण्डालः ॥ तथा करोति ॥

चारु। प्राप्तोऽहं व्यसनकृतां दशामनार्यां,

यत्रेदं फलमपि जीवितावसानं;

एषा च व्यथयति घोषणा मनोमे,

श्रोतव्यं यदिदमसौ त्वया हतेति।

॥ततः प्रविशति प्रासादस्थो बद्धः स्थावरकः। घोषणामाकर्ण्य; सवैक्लव्यं॥ कधं, अपावे चारुदत्ते वावादीअदि। हगे णिअलेण शामिणा बन्धिदे। भोदु; आक्कन्दामि। शुणाध, अज्जा, शुणाध। अत्थि दाणिं मए पावेण पवहणपडिवत्तेण पुप्फकरंडअजिण्णुज्जाणं वशन्तशेणा णीदा, तदो मम शामिणा मं ण कामेशित्ति कदुअ, बाहुपाशबलक्कारेण मालिदा, ण उण एदिणा अज्जेण। कधं, विदूलदाए ण कोवि शुणादि। ता किं कलेमि? अत्ताणअं पातेमि ॥ विचिन्त्य ॥ जदि एव्वं कलेमि, तदा अज्जचारुदत्ते ण वावादीअदि। भोदु, इमादो पाशादबालग्गपदोलिकादो एदिणा जिण्णगवक्खेण अत्ताणअं णिक्खिवामि। बलं हगे उअलदे, ण उण एशे कुलउत्तविहगाणं वाशपादवे अज्ज चारुदत्ते। एव्वं जदि विवज्जामि लद्धे मए पललोए ॥ इत्यात्मानं पातयित्वा॥ ही ण उवलदन्हि; भग्गे

---

(१) अरे पुनरपि घोषय।

मे खंडणिअडे; ता चाण्डालघोसं समखेसामि ॥ इत्युपसृत्य ॥ हंहो चाण्डाल, अन्तरं, अन्तरं (१)।

चाण्डालौ। अले के अन्तलअं मग्गेदि? (२)

चेटः॥ शृणवन्तु, इति पूर्व्वोक्तं पठति॥

चारु। अये।

कोऽयमेवंविधे काले कालपाशस्थिते मयि,
अनावृष्टिहते शस्ये, द्रोणमेघइवोदितः।

भो श्रुतं भवद्भिः

---

(१) कथमपापश्चारुदत्तोव्यापाद्यते अहंनिगडेन स्वामिना बद्धः। भवतु, आक्रन्दामि। शृणुत, आर्य्याः, शृणुत। अस्ति इदानीं मया पापेन प्रवहणपरिवर्त्तेन पुष्पकरण्डकजीर्णोद्यानं वसन्तसेना नीता, ततोमम स्वामिना मां न कामयसे इति कृत्वा, बाहुपाशबलात्कारेण मारिता, न पुनरेतेनार्य्येण। कथं, विदूरतया न कोऽपि शृणोति। तत्किं करोमि? आत्मानं पातयामि, यद्येवं करोमि, तदा आर्य्यचारुदत्तो न व्यापाद्यते। भवतु, अस्याः प्रासादबालाग्रप्रतोलिकातः एतेन जीर्णगवाक्षेणात्मानं निक्षिपामि। वरं अहमुपरतो, न पुनरेषकुलपुत्रविहगानां वासपादपः आर्य्यचारुदत्तः। एवं यदि विपद्ये लब्धो मया परलोकः। आश्चर्य्यंन उपरतोऽस्मि; भग्नोमे दण्डनिगडः; तच्चाण्डालघोषं समन्वेषयामि। हंहो चाण्डालाः।

(२) अरे कः अन्तरं याचते?

न भीतो मारणादस्मि, केवलं दूषितं यशः,
विशुद्धस्य हि मे मृत्युः पुत्रजन्मसमो भवेत्।

अन्यच्च। तेनास्म्यकृतवैरेण क्षुद्रेणात्यल्पबुद्धिना,
शरेणेव विषाक्तेन दूषितेनापि दूषितः।

चाण्डालौ। थावलम, अवि सच्चं भणासि? (१)

चेटः। सच्चं; हगेवि मा कस्सवि कधइस्सशित्ति पाशाद बालग्गपदोलिकाए दण्डणिअलेण बन्धिअ, णिखित्ते (२)।

प्रविश्य ॥ शकारः ॥ सहर्षं ॥

मंशेण तिक्खाविलकेण भत्ते, शाकेण शूपेण समच्छकेण,
भुत्तं मए अत्तणअस्स गेहे शालिश्शकूलेण गुलोदणेण।

॥ कर्णं दत्वा ॥ भिन्नखसखंखणाए चाण्डालवायाए शलशंजोए, जधा अ एशे उरकालिदे वज्झडिंडिमशद्दे पडहाणअ शुणीअदि, तधा तक्केमि; दलिद्दचालुदत्ताके वज्झट्ठाणं णीअदित्ति। ता पेक्खिस्सं। शत्तुविणाशेण महन्ते हलअस्स पडिदोशे होदि। शुदं च मए जेवि किल शत्तुं वावादयंतं पेक्खदि, तस्स अण्णस्सिं जंमन्तले अक्खिलोगे ण होदि। मए क्खु विषगन्दिगब्भपविट्ठेण विअ कीडएण किम्बि अंतलं मग्गमाणेण

---

(१) स्थावरक, अपि सत्यं भणसि?

(२) सत्यं; अहमपि मा कस्यापि कथयिष्यसीति प्रासादबालाग्रप्रतोलिकादण्डनिगडेन बद्धा, निक्षिप्तः।

उप्पादिदे, ताह दलिद्दचालुदत्ताह विणाशे शम्पदं अत्तणके लिंकाए पाशादवालग्गपदोलिआए अहिलुहिअ, अत्तणो पड क्कमं पेक्खामि ॥ तथा कृत्वा दृष्ट्वा च ॥ ही एदाह दलिद्दचालु दत्ताह वज्झणीअमाणाह एशे वड्ढे जणसम्मद्दे; जं वेलं अम्हालिशे पवडे वडमाणुश्शे वज्झं णीअदि, तं वेलं कीदिशं भवे ॥ निरीक्ष्य ॥ कधं, ऐशे शे णववलद्दकविअ मंडिदे दक्खिणं दिशं णीअदि। अध किं णिमित्तं मम केलिकाए पाशादवालग्गप दोलिकाए समीवे घोषणा णिबडिदा, णिवालिदा अ। विलोक्य॥ कधं; थावलके चेडेवि णत्थि; इध मा णाम तेण इदोगदुअ मन्तभेदे कडे भवीअदि। ता जाव णं अस्से शामि (१) ॥ इति अवतीर्य्योपसर्प्पति ॥

---

(१) मांसेन तिक्ताम्लेन भक्तं, शाकेन सूपेन समत्स्यकेन,
भुक्तं मया आत्मनएव गेहे शाल्वश कुलेन गुडौदनेन।

भिन्नकांस्यवत्खंखणायाः चाण्डालवाचायाः स्वरसंयोगः, यथा च एष उद्गीतोवध्यडिण्डिमशब्दः पटहानाञ्च श्रूयते, तथा तर्कयामि, दरिद्रचारुदत्तकोवध्यस्थानं नीयते इति। तत्प्रेक्षिष्ये। शत्रुविनाशेन मम महान् हृदयस्य परितोषो भवति। श्रुतञ्च मया योहि किल शत्रुं व्यापाद्यमानं पश्यति, तस्यान्यस्मिन् जन्मान्तरे अक्षिरोगोन भवति। मया खलु विषग्रन्थिगर्भप्रविष्टे नेव कीटकेन किमपि अन्तरं मृग्यमाणेन उत्पादितं, तस्य दरिद्र

चेटः ॥ दृष्ट्वा ॥ भट्टालका, एशे शे आगडे (१)।

चाण्डालौ। ओशलध, देध मग्गं, दालं ढक्केध, होध तुण्हीआ; अविणअतिक्खविशाणं दुट्ठवइल्ले इदो एदि (२)।

शकारः। अले, अले, अन्तलमन्तलं देध ॥ उपसृत्य ॥ पुत्तका थावलका, चेडा, एहि गच्छम्ह (३)।

---

चारुदत्तस्य विनाशं साम्प्रतं आत्मीयायां प्रासादबालाग्र प्रतोलिकायां अधिरुह्यात्मनः पराक्रमं पश्यामि। वितर्क्य एतस्य दरिद्रचारुदत्तस्य बध्यमानस्य एष वृद्धोजनसम्मर्दो; यस्यां वेलायां अस्मादृशः प्रवरोवरमानुषोबध्यं नीयते, तस्यां वेलायां कीदृशं भवेत्। कथमेष स नवबलीवर्द्द इव मण्डितोदक्षिणां दिशं नीयते। अथ किं निमित्तं मदीयायाः प्रासादबालाग्रप्रतोलिकायाः समीपे घोषणा निपतिता, निवारिता च। कथं स्थावरकश्चेटोऽपि नास्ति; इहं मा नाम तेन इतोगत्वा मन्त्रभेदः कृतोभविष्यति। तत् यावदेनमन्वेषयामि।

(१) भट्टारक, एष स आगतः।

(२) अपसरत, दत्त मार्गं, द्वारं पिधत्त, भवत तुष्णीकाः; अविनयतीक्ष्णविषाणो दुष्टबलीवर्द्द इत एति।

(३) अरे, अरे, अन्तरमन्तरं देहि। पुत्रक स्थावरक, चेटक, एहि गच्छावः।

चेटः। ही, अणज्ज, वसन्तसेणिअं मालिअ ण पलितुट्ठेसि; सम्पदं पणइजणकप्पपादपं अज्जचारुदत्तं मालइदुं ववसिदेसि (१)।

शकारः। ण हि लदणकुम्भशलिशे हगे इत्थिअं वावादेहि (२)।

सर्व्वे। अहो, तुए मालिदा; ण अज्ज चारुदत्तेण (३)।

शकारः। के एव्वं भणादि (४)।

सर्व्वे ॥ चेटमुद्दिश्य ॥ णं एशे साऊ (५)।

शकारः ॥ अपवार्य्य सभयं ॥ अविदमादिके, अविदमादिके! कधं थावलअ चेडे सुट्ठु ण मए शङ्खदे। एशे क्खु मम अकज्जश्श सक्खी ॥ विचिन्त्य ॥ एव्वं दाव कलइश्शं ॥ प्रकाशं ॥ अलिअं, भट्टालका, हो, एशे चेले शुवण्णचोलिआए मए गहिदे पिट्टिदे मालिदे, वड्ढेअ, ता किदवेले एशे, जं भणादि,

---

(१) वितर्के; अनार्य्य, वसन्तसेनां मारयित्वा न परितुष्टोऽसि; साम्प्रतं प्रणयिजनकल्पपादपं आर्य्यचारुदत्तं मारयितुं व्यवसितोऽसि।

(२) नहि रत्नकुम्भसदृशः अहं स्त्रियं व्यापादयामि।

(३) अहो, त्वया मारिता, न चारुदत्तेन।

(४) क एवं भणति।

(५) ननु एष साधुः।

किं शव्वं शच्चं? ॥ अपवारितकेन चेटस्य कटकं प्रयच्छति ॥ स्थैरकं पुत्तका थावलक चेडा, एदं गेह्निअ अनधा भणाहि (१)।

चेटः ॥ गृहीत्वा ॥ पेक्खध, भट्टालका, हो सुवस्रेण मं पलोभेदि (२)।

शकारः ॥ कटकमाच्छिद्य ॥ एशे शे शुवस्नके जश्श कालणा मए वद्धे ॥ सक्रोधं ॥ हंहो, चण्डाला, मए क्खु एशे शुवस्न भण्डाले णिउत्ते, शुवस्नचोलश्रंते मालिदे पिट्टिदे। ता जदि ण पतिआअध, ता पिट्ठिं दाव पेक्खध (३)।

चाण्डालौ ॥ दृष्ट्वा ॥ सोहणं भणादि। विडत्ते चेडे किं ण प्पडवदि (४)।

(१) हन्त, कथं स्थावरक चेटः सुष्ठु न मया संयतः। एष खलु मम अकार्य्यस्य साची। एवं तावत् करिष्यामि। अलीकं, भट्टारका; अहो, एष चेटः सुवर्णचोरिकायामया गृहीतस्ताडितः मारितोबद्धश्च, तत्कृतवैरएष, यत् भणति, किं सर्व्वं सत्यं? पुत्रक स्थावरक चेट, एतद्गृहीत्वा अन्यथा भण।

(२) पश्यत, भट्टारकाः, अहो सुवर्णेन मां प्रलोभयति।

(३) एतत् तत्सुवर्णकं यस्य कारणाय मया बद्धः। हंहो, चण्डाला, मया खलु एष सुवर्णभाण्डारे नियुक्तः, सुवर्णं चोरयन् मारितस्ताडितः। तत् यदि न प्रत्ययध्वं, तदा पृष्ठं तावत्पश्यत।

(४) शोभनं भणति। वितप्तश्चेटः किं न प्रतपति।

चेटः। ही मादिके! ईदिशे दाशभावे जं शच्चं कंपि ण पत्ति आइअदि ॥ सकरुणं ॥ अज्ज चारुदत्त, एत्तिके मे विहवे (१)।

॥ इति पादयोः पतति ॥

चारु ॥ सकरुणं ॥

उत्तिष्ठ, भोः पतितसाधुजनानुकम्पिन्,
निःकारणोपगतबान्धवधर्म्मशील;
यत्नः कृतोऽपि सुमहन्मम मोचणाय,
दैवं न संवदति, किं न कृतं त्वयाद्य।

चाण्डालौ। भट्टके, पिट्टिअ एदं चेडअं णिक्कालेहि (२।

शकारः। णिश्शल ले ॥ इति निर्व्वासयति ॥ अले चाण्डाला, किं विलंवधं; मालेध एदं (३)।

चाण्डालौ। यदि तुवलशि ता शयंजेव्व मालेहि (४)।

रोह। अले चाण्डाला, मं मारेध, मुंचध आवुकं (५)।

---

(१) हन्त! ईदृशोदासभावोयत् सत्यं कमपि न प्रत्याय्यते। आर्य्यचारुदत्त, एतावान् मे विभवइति।

(२) भट्टक, ताडयित्वा एनं चेटं निष्काशय।

(३) निःसर रे। अरे चाण्डालाः, किं विलम्बध्वं; मारयतैनं।

(४) यदि त्वरयसे तदा स्वयमेव मारय।

(५) चाण्डाला, मां मारयत, मुञ्चत पितरं।

शकारः। सपुत्तं जेव्व एदं मालेध (१)।

चारु। सर्व्वमस्य मूर्खस्य सम्भाव्यते। तद्गच्छ पुत्र मातुः समीपं।

रोह। किं मए गदेण कादव्वं (२)।

चारु। आश्रमं वत्स गन्तव्यं गृहीत्वाद्यैव मातरं;
मा पुत्र पितृदोषेण त्वमप्येवं गमिष्यसि।

॥ तद्वयस्य गृहीत्वैनं व्रज ॥

विदू। भो वअस्स, एव्वं तुए जानिदं, तुए विणा अहं पाणाइं धारेमित्ति (३)।

चारु। वयस्य स्वाधीनजीवितस्य न युज्यते तव प्राण परित्यागः।

विदू ॥ स्वगतं॥ जुत्तं णेदं। तधावि ण सक्कुणोमि पिअ वयस्सविरहिदे पाणाइं धारेदुंत्ति; ता वंह्मणीए दारअं समप्पिअ पाणपरिच्चाएण अत्तणोपिअवअस्समणुगमिस्सं ॥ प्रकाशं॥ भो वअस्स, पराणेमि एदं लहुं (४)।

(१) सपुत्रमेव एनं मारयत।

(२) किं मया गतेन कर्त्तव्यं।

(३) भोवयस्य, एवं त्वया ज्ञातं, त्वया विनाहं प्राणान् धारयामीति।

(४) युक्तं नेदं। तथापि न शक्नोमि प्रियवयस्यविरहितः प्राणान् धर्त्तुं इति; तत् ब्राह्मण्यै दारकं समर्प्य प्राणपरित्यागेन प्रियवयस्यमनु गमिष्यामि। भो वयस्य परानयामि एतं लघुं।

॥ इति सकंठग्रहं पादयोः पतति ॥ दारकोऽपि रुदन् पतति॥

शकारः। अले णं भणामि सपुत्ताकं चालुदत्ताकं वावादेधत्ति (१)।

चारु ॥ भयं नाटयति ॥

चाण्डालौ। अले णहि अम्हाणं ईदिशी लाआणत्ती, जधा सपुत्तं चारुदत्तं वावादेधत्ति; ता निक्कम ले दालआ (२)।

॥ इति निष्क्रामयतः ॥

चाण्डालौ। इमं तइअं घोसणथाणं, ताडेध डिण्डिमं (३)।

॥ पुनर्घोषयत ॥

शकारः ॥ स्वगतं॥ कधं एशे ण पत्तिआअंति पौलाः ॥ प्रकाशं॥ हंहो चारुदत्ता, वडुवुडुका, ण पत्तिआअदि एशे पौलजणे; ता अत्तणकेलिकाए जीहाए भणाहि, मए वशन्तशेणिआ मालिदेत्ति (४)।

(१) अरे ननु भणामि सपुत्रकं चारुदत्तं व्यापादयतेति।

(२) अरे न ह्यस्माकमीदृशी राजाज्ञप्तिः, यथा सपुत्रं चारुदत्तं व्यापादयतेति; तस्मात् निष्क्रम रे दारक।

(३) इदं तृतीयं घोषणास्थानं, ताडयत डिण्डिमं।

(४) कथमेते न प्रत्ययन्ते पौराः। अरे चारुदत्त, वृद्ध वटुक, न प्रत्ययते एष पौरजनः; तदात्मीयया जिह्वया भण, मया वसन्तसेनिका मारितेति।

चारु ॥ तूष्णीमास्ते ॥

शकारः। अले चाण्डालगोहे, ण भणादि चारुदत्त वुडुवके। ता, भणावेध इमिणा जज्जलवंशखण्डेन शंखलेन तालिअ (१)।

चाण्डालः ॥ प्रहारमुद्यम्य ॥ भो चारुदत्त भणाहि (२)।

चारु ॥ सकरुणं ॥

प्राप्येतद्व्यसनमहार्णवप्रयातं
न त्रासो न च मनसोऽस्ति मे विषादः;
एकोमां दहति जनापवादवह्नि
र्वक्तव्यं यदिह मया हता प्रियेति।

शकारः ॥ पुनस्तथैव ॥

चारु॥ भो भो पौराः; मया खलु नृशंसेनेत्यादि पुनः पठति ॥

शकारः। वावादिदा? (३)

चारु। एवमस्तु।

चाण्डा। अले, तव वद्धवालिआ (४)।

(१) अरे चाण्डाल गोह, न भणति चारुदत्तवृद्ध वटुकः। तद्भणयत अनेन जर्जरवंशखण्डेन शृंखलेन ताडयित्वा।

(२) भो चारुदत्त भण।

(३) व्यापादिता।

(४) अरे, तव बध्यपालिका।

द्वितीयः। अले, तव (१)।

प्रथमः। अले, लेखअं कलेम्ह (२)।

॥ इति बहुविधं लेखकं कृत्वा ॥

प्रथमः। अले जदि मम केलिका वझ्झवालिआ, ता चिट्ठदु दाव मुहुत्तअं (३)।

द्वितीयः। किं णिमित्तं (४)।

प्रथमः। अले, भणिदोम्हि पिदुणा सग्गं गच्छन्तेण, यथा, पुत्त वीरअ, जइ तुह वज्झवालो होदि, मा सहसत्ति वावादी असि वज्झं (५)।

द्वितीयः। अले, किं णिमित्तं (६)।

(१) अरे, तव।

(२) अरे, लेखं कुर्म्मः।

(३) अरे यदि मम मदीयबध्यपालिका, तदा तिष्टतु तावत् मुहूर्त्तं।

(४) किं निमित्तं।

(५) अरे भणितोऽस्मि पित्रा स्वर्गं गच्छता, यथा, पुत्र वीरक, यदि तव बध्यपालोभवति, मा सहसैव व्यापादयसि बध्यं।

(६) अरे, किं निमित्तं।

प्रथमः। कदावि कोवि शाधू अत्थं दइअ वज्झं मोआवेदि; कदावि लस्रो पुत्ते भोदि तेण वड्ढावेण शव्ववज्झाणं मोक्खो होदि; कदावि हत्थी बन्धं खण्डेदि तेण शंभमेण वज्झे मुत्ते होदि; कदावि लाअपडिवत्ते होदि तेन शव्ववज्झाणं मोक्खो होदि(१)

शकारः। किं किं लाअप्पडिवत्ते होदि (२)।

चाण्डा। अले, वज्झवाडिआए लेखअं कलेम्ह (३)।

शकारः। अले, शिग्घं मालेध चालुदत्ताकं(४)।

॥ इत्युक्त्वा चेटं गृहीत्वा एकान्ते स्थितः॥

चाण्डा। अज्ज चालुदत्त, लाअणिओओ खु अवरज्झदि, ण खु अम्हे चाण्डाल; ता सुमलेहि जं सुमलिदव्वं(५)।

---

(१) कदापि कोऽपि साधुरर्थं दत्वा बध्यं मोचयति; कदापि राज्ञः पुत्रोभवति तेन वृद्धिमहोत्सवेन सर्व्वबध्यानां मोचोभवति; कदापि हस्ती बन्धं खण्डयति तेन सम्भ्रमेण बध्योमुक्तोभवति; कदापि राजपरिवर्त्तोभवति तेन सर्व्व बध्यानां मोचोभवति।

(२) किं किं राजपरिवर्त्तोभवति।

(३) अरे, बध्यपालिकायालेखं कुर्म्मः।

(४) अरे, शीघ्रं मारयत चारुदत्तं।

(५) आर्य्य चारुदत्त राजनियोगः खलु अपराध्यति, न खलु वयं चाण्डालाः; तत्स्मर यत् स्मर्त्तव्यं।

चारु। प्रभवति यदि धर्म्मो दूषितस्यापि मेऽद्य
प्रबलपुरुषवाक्यैर्भाग्यदोषात्कथञ्चित्;
सुरपतिभवनस्था यत्र तत्र स्थिता वा
व्यपनयतु कलङ्कं स्वस्वभावेन सैव। |2a|

भो, क्व तावन्मया गन्तव्यं।

चाण्डा ॥ अग्रतोदर्शयित्वा ॥ अले, एदं दीशदि दक्खिण मशाणं, जं पेक्खिअ वज्झा झत्ति पाणाइं मुञ्चति; पेक्ख;

अद्धकलेवरपडिवत्तं कड्ढन्ति दीहगोमाओ,
अद्धं वि शूललग्गं वेशं विअ अट्टहाशश्श (१)।

चारु। हा! हतोऽस्मि मन्दभाग्यः ॥ इति सावेगमुपविशति ॥

शकारः। ण दाव गमिश्शं चारुदत्ताकं वावादअन्तं दाव पेक्खामि ॥ परिक्रम्य ॥ दृष्ट्वा ॥ कधं उववित्ते (२)।

चाण्डालः। चालुदत्ता, किं भीदेशि? (३)

---

(१) अरे इदं दृश्यते दक्षिणश्मशानं यत्प्रेक्ष्य बध्या झटिति प्राणान् मुञ्चन्ति पश्य;

अर्द्धकलेवरप्रतिवृत्तं कर्षन्ति दीर्घगोमायवः,
अर्द्धमपि शूललग्नं वेशमिवाट्टहासस्य।

(२) न तावद्गमिष्यामि चारुदत्तकं व्यापाद्यमानं तावत्पश्यामि। कथमुपविष्टः।

(३) चारुदत्त, किं भीतोऽसि?

चारु ॥ सहसोत्थाय ॥ मूर्ख!

न भीरुर्मरणादस्मि केवलं दूषितं यशः।

॥ इत्यादि पुनः पठति ॥

चाण्डा। अज्ज चारुदत्त, गअणदले पडिवसंता चंद सुज्जा विपत्तिं लहन्ति; किं पुण जणामलणभीलुआ माणवा वा; लोए कोवि उट्ठिदोपलदि, कोवि पडिदोवि उट्ठेदि। उट्ठन्त पडन्ताह वसणपाडिआवसा उण अत्थि। एदाइं हिअए कदुअ सन्धालेहि अत्ताणअं॥ चाण्डालं प्रति॥ एदं चउत्थघोषणाट्ठाणं, ता उग्घोसम्ह (१)।

॥ पुनस्तथैवोद्घोषयति ॥

चारु। हा प्रिये वसन्तसेने॥ शशिविमलमयूखेत्यादि पठति॥

ततः प्रविशति ससंभ्रमा वसन्तसेना भिक्षुश्च।

भिक्षुः। ही माणहे! पत्थाणपडिश्शन्तिं शमश्शाशिअ वसन्त

---

(१) आर्य्य चारुदत्त, गगणतले प्रतिवसन्तौ चन्द्रसूर्य्यौ विपत्तिं लभेते; किं पुनर्जनामरणभीरुकामानवा वा; लोके कोऽप्युत्थितः पतति, कोऽपि पतितोऽप्युत्तिष्ठते। उत्तिष्ठतः पतनस्य वसनपातिका अवस्था पुनरस्ति। एतानि हृदये कृत्वा संधारयात्मानं। एतत् चतुर्थं घोषणास्थानं, उद्घोषयाम।

अहिअं णअन्तो अणुग्गिहिदह्मि पव्वज्जाए; उवासिके, कहिं तुमं णइस्सं? (१)

वसं। अज्ज चारुदत्तस्सेज्जेव्व गेहं; तस्स दंसणेण मअलं-छणस्स विअ कुमुदिणिं आणंदेहि मं (२)।

भिक्षुः ॥ स्वगतं॥ कदलेण मग्गेण पविशामि ॥ विचिन्त्य ॥ लाअमग्गेणज्जेव्व पविशामि। उवासिके, एहि इमं लाअमग्गं ॥ आकर्ण्य॥ किं णु क्खु एशे लाअमग्गे महन्ते कलअले सुणीअदि (३)।

वसं॥ अग्रतोनिरूप्य॥ कधं, पुरदो महाजणसमूहो; अज्ज, जाण हि दाव किंणेदंत्ति। विसमभरक्कंता विअ वसुन्धराए आवासोसदा उज्जइणी वट्टदि (४)।

(१) आश्चर्य्यं! प्रस्थानपरिश्रान्तां समाश्वास्य वसन्तसेनिकां नयन् अनुगृहीतोऽस्मि प्रव्रज्यया; उपासिके, कुत्र त्वां नेष्यामि?

(२) आर्य्य चारुदत्तस्यैव गेहं; तस्य दर्शनेन मृगलाञ्छनस्येव कुमुदिनीं आनन्दय मां।

(३) कतरेण मार्गेण प्रविशामि। राजमार्गेणैव प्रविशामि। उपासिके, एहि इमं राजमार्गं। किंनु खलु एष राजमार्गे महान् कलकलः श्रूयते।

(४) कथं, पुरतोमहान् जनसमूहः; आर्य्य, जानीहि तावत् किं नेदमिति। विषमभराक्रान्ताइव वसुन्धरा एकवासोन्नता उज्जयिनी वर्त्तते।

चाण्डा। इमं अ पच्छिमं घोसणट्ठाणं, ता ताडेध डिण्डिमं, उग्घोसेध घोषणं ॥ तथा कृत्वा॥ भो चालुदत्त, पडिवालेह माणीअदि (१)।

चारु ॥भगवत्योर्देवता:॥

भिक्षुः ॥ श्रुत्वा ससंभ्रमं॥ उवासिके, तुमं किल चालुदत्तेण मालिदाशित्ति, चालुदत्तो मालिदुं णीअदि (२)।

वसं ॥ससंभ्रमं॥ हद्धी, हद्धी; कधं, मम मन्दभाइणीए कदे अज्ज चालुदत्तो वावादीअदि। भो तुरिदं, भो तुरिदं, आदेसेहि मग्गं (३)।

भिक्षुः। तुवलदु, तुवलदु, वुद्धोवासिआ, अज्ज चालुदत्तं जीअन्तं समस्सादिदुं। अज्जा, अन्तलमन्तलं देध (४)।

वसं ॥ अन्तलमन्तलं॥ (५)

---

(१) इदञ्च पश्चिमं घोषणास्थानं; तत्ताडयत डिण्डिमं, उद्घोषयत घोषणां। भो चारुदत्त, प्रति शीघ्रमेव त्वं मार्य्यसे।

(२) उपासिके, त्वं किल चारुदत्तेन मारितासीति, चारुदत्तोमारयितुं नीयते।

(३) हा धिक्, हा धिक्; कथं, मम मन्दभागिन्या: कृते आर्य्य चारुदत्तोव्यापाद्यते। भो त्वरितं, भो त्वरितं, आदिश मार्गं।

(४) त्वरतां, त्वरतां, बुद्धोपासिका, आर्य्यचारुदत्तं जीवन्तं समाश्वासितुं। आर्य्या, अन्तरमन्तरं दत्त।

(५) अन्तरमन्तरं।

चाण्डा। अज्ज चारुदत्त, सामिणिओओ अवरज्झदि, ता सुमरेहि जं सुमरिदव्वं (१)।

चारु। किं बहुना ॥ प्रभवतीत्यादिश्लोकं पठति ॥

चाण्डा ॥ खड्गमाकृष्य ॥ अज्ज चारुदत्ता, उत्ताणो भविअ, समं चिट्ठ; एक्कपहालेण मालिअ तुमं सग्गं णेम्ह (२)।

॥ तथा तिष्ठति ॥

चाण्डा॥ प्रहर्त्तुमीहते खड्गपतनं हस्तादभिनयन्॥ ही, कधं

आअड्डिदे अलोसं मुट्ठीए मुट्ठिणा गहीदेवि,

धलणीए कीस पडिदे दालुणके असणिसलिसे खग्गे।

जधा एदं संवुत्तं तधा तक्केमि, ण विवज्जदि अज्जचारुदत्ति। भअवदि सह्यवासिणि, पसीद, पसीद; अवि णाम चारुदत्तस्स मोक्खो भवे तदो अणुगिहिदं तुए चाण्डाल उलं भवे (३)।

---

(१) आर्य्य चारुदत्त स्वामिनियोगः अपराध्यति, तत् स्मर यत् स्मर्त्तव्यं।

(२) आर्य्य चारुदत्त, उत्तानोभूत्वा, समं तिष्ठ; एक प्रहारेण मारयित्वा त्वां स्वर्गं नयामः।

(३) आकृष्टः सरोषं मुष्टामुष्टिना गृहीतोऽपि,

धरण्यां किमर्थं पतितो दारुणकोऽशनिसन्निभः खड्गः।

यथा एतत्सम्वृत्तं तथा तर्कयामि, न विपद्यते आर्य्यचारुदत्त इति। भगवति सह्यवासिनि, प्रसीद, प्रसीद, अपि नाम

अपरः। अधाअत्तमणुचिट्ठम्ह (१)।

प्रथमः। भोदु, एव्वं करोम्ह (२)।

इत्युभौ चारुदत्तं शूले समारोपयितुमिच्छतः।

चारु ॥ प्रभवतीत्यादि पुनः पठति ॥

भिक्षुः। वसन्तसेना च ॥ दृष्ट्वा ॥ अज्जा, मा दाव; अज्जा, एषा अहं मन्दभाइणी जस्सा कारणादो एषो वावादीअदि (३)।

चाण्डा ॥ दृष्ट्वा ॥

तुलिदं का उण एशा अंसपलन्तेण चिउलभालेण,

मा मेत्ति वाहलन्ती, उक्खिदहत्था इदो एदि (४)।

वसं। अज्ज चारुदत्त, किं णेदंत्ति ॥ उरसि पतति (५)॥

भिक्षुः। अज्ज चारुदत्तस्स किंणेदमिति॥ पादयोः पतति (६)॥

---

चारुदत्तस्य मोक्षोभवेत्तदानुगृहीतं त्वया चण्डालकुलंभवेत्।

(१) यथाज्ञप्तमनुतिष्ठावः।

(२) भवतु एवं कुर्व्वः।

(३) आर्य्या, मा तावत्, आर्य्या, एषा अहं मन्दभागिनी यस्याः कारणादेष व्यापाद्यते।

(४) त्वरितं का पुनरेषा अंसपतता चिकुरभारेण,

मामेति व्याहरन्ती, उत्थितहस्ता इतएति।

(५) आर्य्य चारुदत्त, किं नेदमिति।

(६) आर्य्य चारुदत्तस्य, किं नेदमिति।

चाण्डा ॥ सभयमुपसृत्य ॥ कधं, वसन्तसेणा; णं क्खु अम्हेहिं साऊ ण वावादिदे (१)।

भिक्षुः ॥ उत्थाय ॥ अले, जीवदि चालुदत्ते (२)।

चाण्डा। जीवदि वस्सरसदं (३)।

वसं ॥ सहर्षं ॥ पच्चुज्जीविदह्मि (४)।

चाण्डा। ता जाव एदं वुत्तं राइणो जणवाडगदस्स णिवेदेम्ह (५)।

॥ इति निष्क्रामतः ॥

शकारः ॥ वसन्तसेनां दृष्ट्वा सत्रासं ॥ ही मादिके! केण गब्भदासी जीवाविदा? उक्कन्ताइं मे पाणाइं! भोदु, पलाइश्शं (६)।

॥ इति पलायते ॥

---

(१) कथं, वसन्तसेना ननु खलु अस्माभिः साधुर्न व्यापादितः।

(२) अरे जीवति चारुदत्तः।

(३) जीवति वर्षशतं।

(४) प्रत्युज्जीवितास्मि।

(५) यावदेतं वृत्तान्तं राज्ञोयज्ञवाटगतस्य निवेदयावः।

(६) विस्मयं; केन गर्भदासी जीवनं प्रापिता? उत्क्रान्ता मे प्राणा, भवतु पलायिष्ये।

चाण्डा ॥ उपसृत्य ॥ अले, णं अम्हाणं ईदिशा लाश्रा णत्ती, जेण शा वावादिदा तं मालेध, ता लट्टिअशालअंजेव्व अखेशम्ह (१)।

॥ इति निष्क्रान्तौ ॥

चारु ॥ सविस्मयं॥ केयमभ्युद्यते शस्त्रे मृत्युवक्त्रगते मयि,

अनावृष्टिहते शस्ये द्रोणवृष्टिरिवागता।

अवलोक्य च।

वसन्तसेना; किमियं द्वितीया समागता, सैव दिवः किमित्थं, भ्रान्तं मनः पश्यति वा ममैनां, वसन्तसेना न मृताथ सैव।

अथवा।

किं नु स्वर्गात्पुनः प्राप्ता, मम जीवातुकाम्यया

तस्या रूपानुरूपेण किमुतान्येयमागता।

वसं ॥ सास्रं उत्थाय पादयोर्निपत्य॥ अज्ज चारुदत्त, साज्जेवाहं पावा, जाए कारणादो इअं तुए असरिसी अवत्था पाविदा (२)।

॥नेपथ्ये॥ अच्चरिअं, अच्चरिअं, जीवदि वसन्तसेणा (३)।

---

(१) ननु अस्माकमीदृशी राजाज्ञप्तिः, येन सा व्यापादिता तं मारयत। तत् राष्ट्रियश्यालमेवान्वेषयावः।

(२) आर्य्य चारुदत्त, सैवाहं पापा, यस्याः कारणादियं त्वया असदृशी अवस्था प्राप्ता।

(३) आश्चर्य्यं, आश्चर्य्यं, जीवति वसन्तसेना।

॥ इति सर्व्वे पठन्ति ॥

चार ॥ आकर्ण्य सहसोत्थाय, सस्पर्शसुखनिमीलिताक्ष एव हर्षगद्गदाक्षरं ॥ प्रिये, वसन्तसेना त्वं?

वसं। सा जेव्वाहं मन्दभाआ (१)।

चार ॥ निरूप्य सहर्षं ॥ कथं वसन्तसेनैव ॥ सानन्दं ॥

कुतोवाष्पाम्बुधाराभिः स्नपयन्ती पयोधरौ,
मयि मृत्युवशं प्राप्ते विद्येव समुपागता।

प्रिये, वसन्तसेने।

त्वदर्थमेतद्विनिपात्यमानं देहं त्वयैव प्रतिमोचितं मे,
अहो प्रभावः प्रियसङ्गमस्य, मृतोऽपि कोनाम पुनर्ध्रियेत।

अपिच। प्रिये, पश्य;

रक्तं तदेव वरवस्त्रमियञ्च माला,
कान्तागमेन हि वरस्य यथा विभाति;
एते च वध्यपटहध्वनयस्तथैव
जाताविवाहपटहध्वनिभिः समानाः। (७१)

वसं। अदिदक्खिणदाए किं णेदं ववसिदं अज्जेण (२)।

चार। प्रिये, त्वं किल मया हतेति।

पूर्व्वानुबद्धवैरेण शत्रुणा प्रभविष्णुना,
नरके पतता मेन मनागस्मि निपातितः। (७२)

(१) सैवाहं मन्दभाग्या।

(२) अति दक्षिणतया किं नेदं व्यवसितमार्य्येण।

वसं ॥ कर्णौ पिधाय ॥ शान्तं, पावं; तेणम्हि राअसालेण वावादिदा (१)।

चारु ॥ भिक्षुं दृष्ट्वा ॥ अयमपि कः?

वसं। तेण अणज्जेण वावादिदा, एदिणा अज्जेण जीवा विदम्हि (२)।

चारु। कस्त्वमकारणबन्धुः।

भिक्षु। ण पच्चभिआणादि मं अज्जो? अहं शे अज्जश्श चलणसंवाहचिन्तए शंवाहके; जूदिअलेहिं गहिदे, एदाए उवाशिआए अज्जश्श केलकेत्ति अलंकालपणिकीदेम्हि। तेण अ जूदणिव्वेदेण शक्कशमणके संवुत्तेम्हि। एशावि अज्जा पवहणविअज्जाशेण पुप्फकरण्डअजिण्णुज्जाणं गदा; तेण अ अणज्जेण ण मं बुज्झ मणेशित्ति वाऊपाशवलक्कालेण मालिदा, मए दिट्ठा (३)।

(१) शान्तं, पापं; तेनास्मि राजश्यालेन व्यापादिता।

(२) तेनानार्य्येण व्यापादिता, एतेन आर्य्येण जीवं प्रापितास्मि।

(३) न प्रत्यभिजानाति मामार्य्यः? अहं स आर्य्यस्य चरणसंवाहचिन्तया संवाहको; द्यूतकरैर्गृहीतः, एतया उपा

नेपथ्ये। कलकलः।

जयति वृषभकेतुर्दक्षयज्ञस्य हन्ता;
तदनु जयति भेत्ता षण्मुखः क्रौञ्चशत्रुः;
तदनु जयति कृत्स्नां शुभ्रकैलासकेतु
र्विनिहितवरवैराचार्य्यकोगां विशालां

प्रविश्य सहसा शर्विलकः।

शर्वि। हत्वा तं कुनृपमहं हि पालकं भो.
स्वराज्ये द्रुतमभिषिच्य चार्य्यकं तं;
तस्याज्ञां शिरसि निधाय शेषभूतां
मोक्ष्येऽहं व्यसनगतं च चारुदत्तं।
हत्वा रिपुं तं बलमन्त्रहीनं,
पौरान् समाश्वस्य पुनः प्रकर्षान्,
प्राप्तं समग्रं वसुधाधिराज्यं,
राज्यं बलारेरिव शत्रुराज्यं।

॥ अग्रतोनिरूप्य ॥ भवितव्यमत्तेन भवितव्यं।

---

सिकया आर्य्यस्यात्मीयइति अलङ्कारपणनिष्क्रीतोऽस्मि। तेन च द्यूतनिर्व्वेदेन शाक्यश्रमणकः संवृत्तोऽस्मि। एषापि आर्य्या प्रवहणविपर्य्यासेन पुष्पकरण्डकजीर्णोद्यानं गता, तेन चानार्य्येण न मां बहु मन्यसे इति बाहुपाशबलात्कारेण मारिता, मया दृष्टा।

यत्रायं जनपदसमवायः अपि नामायं वारम्भः,
क्षितिपतेरार्य्यकस्यार्य्यचारुदत्तस्य जीवितेन सफलः स्यात्।

त्वरिततरमुपसृत्य ॥ अपयात जाल्माः ॥ दृष्ट्वा सहर्षं॥ अपि ध्रियते चारुदत्तः सह वसन्तसेनया, संपूर्णाः सत्वरं स्वामिनो मनोरथाः।

दिष्ट्या भो व्यसनमहार्णवादपारा
दुत्तीर्णं गुणधृतया सुशीलवत्या;
तावेव प्रियतमया चिरान्निरीक्षे
ज्योत्स्नाढ्यं शशिनमिवापरागमुक्तं।

तत्कृतमहापातकः कथमिवैनं उपसर्प्पामि। अथवा। सर्व्वत्रार्ज्जवं शोभते ॥ प्रकाशं उपसृत्य बद्धाञ्जलिः॥ आर्य्य चारुदत्त।

चारु। ननु कोभवान्?

शर्व्वि। येन ते भवनं भित्त्वा न्यासापहरणं कृतं,
सोऽहं कृतमहापापस्त्वामेव शरणं गतः।

चारु। सखे मैवं। त्वयासौ प्रणयः कृतइति कण्ठे गृह्णाति।

शर्व्वि। अन्यच्च, अन्यच्च;
आर्य्यकेणार्य्यवृत्तेन कुलं मानञ्च रक्षता,
पशुवद्यज्ञवाटस्थोदुरात्मा पालकोहतः।

चारु। किं?

शर्व्वि। त्वद्यानं यस्समारुह्य गतस्त्वां शरणं पुरा,
पशुवद्वितते यज्ञे हतस्तेनाद्य पालकः।

चारु। शर्व्विलक, योऽसौ पालकेन घोषादानीय निष्कारणं कूटागारे बन्धने बद्धः आर्य्यकनामा त्वया मोचितः?

शर्व्वि ॥ यथाह तत्रभवान् ॥

चारु। प्रियं नः प्रियं।

शर्व्वि। प्रतिष्ठितमात्रेण तव सुहृदा आर्य्यकेण उज्ज यिन्यां वेणातटे कुशावत्यां राज्यमतिसृष्टं। तत्प्रतिमान्यतां प्रथमः सुहृत्प्रणयः॥ परिवृत्य॥ अरे रे आनीयतामयं पापो राष्ट्रियशठः।

॥ नेपथ्ये ॥ यथाज्ञापयति।

शर्व्वि। आर्य्य, नन्वयमार्य्यको राजा विज्ञापयति; इदं मया युष्मद्गुणोपार्जितं तदुपयुज्यतां।

चारु। अस्मद्गुणोपार्जितं राज्यं।

॥ नेपथ्ये ॥ अरे रे राष्ट्रिय श्यालक। एह्येहि स्वस्याविनयस्य फलमनुभव

॥ ततः प्रविशति पुरुषैरधिष्ठितः पश्चाद्बाहुबद्धः शकारः ॥

शकारः। हीमादिके!

एवं दूलमदिक्कन्ते, उद्दामे विअ गद्दहे,
आणीदे क्खु हगे वद्धे ऊडे अणोवदुक्कले (१)।

॥ दिशोऽवलोक्य ॥

---

(१) विस्मयं। एवं दूरमतिक्रान्त, उद्दामइव गर्द्दभः,
आनीतः खल्वहं बद्धः कुक्कुरोन्यवदुष्करः।

समन्तदो उवट्ठिदे शे लट्ठिअबन्धे। ता कं दाणि अशलणे शलणं पवज्जामि ॥ विचिन्त्य ॥ भोदु; तं जेव्व अब्भुववण्णशल णलक्खणं गच्छामि ॥ इत्युपसृत्य ॥ अज्ज चालुदत्त, पलित्ता एहि पलित्ता एहि ॥ इति पादयोः पतति ॥ (१)

नेपथ्ये। अज्ज चालुदत्त, मुञ्च, मुञ्च; वावादेम्ह एदं (२)।

शकारः ॥ चारुदत्तं प्रति ॥ भो अशलणशलणे पलित्ता एहि (३)।

चारु ॥ सानुकम्पं ॥ अहह अभयमभयं शरणागतस्य।

शर्व्विं ॥ सावेगं ॥ आः! अपनीयतामयं॥ चारुदत्तः पश्यति ॥ चारुदत्तं प्रति ॥ न मुच्यतां; किमस्य पापस्यानुष्ठीयतामिति?

आकर्षतु सुवध्वेनं, श्वभिः संखाद्यतामथ,
शूले वा तिष्ठतामेष, पाद्यतां क्रकचेन वा।

चारु। किमहं यद्ब्रवीमि तत्क्रियते?

शर्व्विं ॥ कोऽत्र सन्देहः ॥

---

(१) समन्तत उपस्थितः स राष्ट्रियबन्धः। तत्किमिदानीमशरणः शरणं प्रव्रजामि। भवतु; तमेवाभ्युपपन्नशरणरक्षणं गच्छामि। आर्य्य चारुदत्त, परित्रायस्व, परित्रायस्व।

(२) आर्य्य चारुदत्त, मुञ्च, मुञ्च; व्यापादयामएनं।

(३) भो अशरणशरण, परित्रायस्व।

शकारः। भट्टालश्रा चालुदत्त, शलणागदेम्हि; ता पलित्ताएहि; जं तुए शलिशं तं कलेहि; पुणो ण ईदिशं करिश्शं (१)।

॥नेपथ्ये; पौरा॥ वावादेध,किंणिमित्तं पातकी जीवावीअदि (२)।

वसं ॥ बध्यमालां चारुदत्तस्य कंठादपनीय शकारस्योपरि क्षिपति॥

शकारः। गब्भदाशीधीदे पशीद; ण पुणो मालइश्शं, ता पलित्ताआहि (३)।

शर्व्विं। अरे रे अपनयत; आर्य्यचारुदत्ताज्ञाप्यतां, किमस्य पापस्यानुष्ठीयतां।

चारु। किमहं यद्ब्रवीमि तत्क्रियते?

शर्व्विं। कोऽत्र सन्देहः।

चारु। सत्यं?

शर्व्विं। सत्यं।

चारु। यद्येवं; शीघ्रमयं—

शर्व्विं। किं; हन्यतां—

---

(१) भट्टारक चारुदत्त शरणागतोऽस्मि, तत्परित्रायस्व; यत्तव सदृशं तत्कुरु; पुनर्न ईदृशं करिष्यामि।

(२) व्यापादयत किंनिमित्तं पातकी जीव्यते।

(३) गर्भदासीपुत्रि प्रसीद, न पुनर्मारयिष्यामि, तत्परित्रायस्व।

चारु। नहि, नहि; मुच्यतां।

शर्व्वि। किमर्थं?

चारु। शत्रुः कृतापराधः शरणमुपेत्य पादयोः पतितः शस्त्रेण न हन्तव्यः।

शर्व्वि। एवं तर्हि श्वभिः खाद्यतां।

चारु। नहि, उपकारहतस्तु कर्त्तव्यः।

शर्व्वि। अहो आश्चर्य्यं! किं करोमि; वदत्वार्य्यः।

चारु। तन्मुच्यतां।

शर्व्वि। इति मुक्तः।

शकारः। ह्रीमादिके! पच्चुज्जीविदेम्हि (१)॥ इति पुरुषैः सह निष्क्रान्तः॥

नेपथ्ये ॥कलकलः।पुनर्नेपथ्ये॥ एशा अज्जचारुदत्तस्स वहूआ अज्जा धूदा, पदे वसनञ्चले विलग्गन्तं दारअमाक्खिवन्ती, वाहभरिदणअणेहिं जणेहिं णिवारिज्जमाणा,पज्जलिदे पावए पविसदि (२)।

---

(१) विस्मये! प्रत्युज्जीवितास्मि ॥इतः परं नीलकण्ठे नापूरि॥

(२) एषा आर्य्य चारुदत्तस्य बधूरार्य्या धूता, पदे वसनाञ्चले विलगन्तं दारकमाक्षिपन्ती, वाष्पभरितनयनैर्जनैर्निवार्य्यमाणा, प्रज्वलिते पावके प्रविशति।

शर्व्वि ॥ आकर्ण्य नेपथ्याभिमुखमवलोक्य ॥ कथं; चन्दनकः, चन्दनक, किमेतत्?

॥ प्रविश्य चन्दनकः ॥ किं ण पेक्खदि अज्जो, महाराअप्पासादं दक्खिणेण महन्तोजणसंमद्दो वट्टदि ॥ एसेत्यादि पुनः पठति ॥ कधिदं अ मए तीए, जधा, अज्जे मा साहसं करेहि, जीवदि अज्जचारुदत्तोत्ति; परंतु दुक्खवावुडदाए को सुणेदि को पत्तियाएदि (१)।

चारु ॥ सोद्वेगं ॥ हा प्रिये जीवत्यपि मयि किमेतद्व्यवसितं।

॥ ऊर्द्धमवलोक्य दीर्घं निश्वस्य च ॥

न महीतलस्थितिसहानि भवच्चरितानि चारुचरिते यदपि,

उचितं तथापि परलोकसुखं न पतिव्रते तव विहाय पतिं।

॥ इति मोहमुपगतः ॥

शर्व्वि। अहो प्रमादः;

त्वरायाः सर्पयस्तत्र मोहमार्य्योऽत्र चागतः,

हा धिक् प्रयत्नवैफल्यं दृश्यते सर्व्वतोमुखं।

---

(१) किं न पश्यति आर्य्यो, महाराजप्रसादं दक्षिणेन महान् जनसंमर्द्दोवर्त्तते। कथितञ्च मया तस्यै, यथा, आर्य्ये मा साहसं कुरुष्व, जीवति आर्य्यचारुदत्तइति; परन्तु दुःखव्याप्ततया कः शृणोति कः प्रत्ययते।

वसं। समस्सासिदु अज्जो; तत्थ गदुअ, जीवावेदु अज्जां; अस्सधा अधीरत्तणेण अणत्थो सम्भावीअदि (१)।

चारु ॥ समाश्वस्य सहसोत्थाय ॥ हा प्रिये, क्वासि; देहि मे प्रतिवचनं।

चंद। इदो इदो अज्जो (२)।

॥ इति सर्व्वे परिक्रामन्ति ॥

ततः प्रविशति यथा निर्दिष्टा धूता चेलाञ्चलमाकर्षन् विदूषकेणानुगम्यमानो रोहसेनो रदनिका च।

धूता ॥ सास्रं ॥ जाद मुञ्चेहि मं; मा विग्घं करेहि; भीआमि अज्जउत्तस्स अमङ्गलाकसादो (३)।

॥ इत्युत्थायाञ्चलमाकृष्य पावकाभिमुखं परिक्रामति ॥

रोह। दत्व अज्जए पडिवालेसु मं, तुए विणा ण सक्कणोमि जीविदं धारेदुं (४)।

---

(१) समाश्वसितु आर्य्यः, तत्र गत्वा जीवयतु आर्य्यां; अन्यथा अधीरत्वेनानर्थः सम्भाव्यते।

(२) इत इत आर्य्यः।

(३) तात मुञ्च मां; मा विघ्नं कुरुष्व, बिभेमि आर्य्यस्या मङ्गलाकर्णनात्।

(४) हा आर्य्ये प्रतिपालय मां, त्वया विना न शक्नोमि जीवितं धर्त्तुं।

॥ इति त्वरितमुपसृत्य पुनरञ्चलं गृह्णाति ॥

विदू। भोदीएदाव बह्मणीए भिण्णत्तणेण चिदाधिरोहणं पावमुदाहरन्ति रिसीओ (१)।

धूता। वरं पावाचरणे, ण उण अज्जउत्तस्स अमङ्गला कण्णं (२)।

शर्व्वि ॥ पुरोऽवलोक्य ॥ आसन्नङ्कतवहार्य्या तत्त्व र्य्यतां।

चारु ॥ त्वरितं परिक्रामति ॥

धूता। रअणिए, अवलम्ब दारअं, जाव अहं समीहिदं करेमि (३)।

चेटी ॥ सकरुणं॥ अहंवि यथोवदेसिणिह्मि भट्टिणीए(४)।

धूता ॥ विदूषकमवलोक्य॥ अज्जो दाव अवलंवेदु (५)।

---

(१) भवत्यास्तावत् ब्राह्मणाभिन्नत्वेन चितारोहणं पापमुदाहरन्ति ऋषयः।

(२) वरं पापाचरणं, न पुनरार्य्यपुत्रस्यामङ्गलाकर्णनं।

(३) रदनिके, अवलम्बस्व दारकं, यावदहं समीहितं करोमि।

(४) अहमपि यथोपदेशिन्यस्मि भट्टिन्याः।

(५) आर्य्यस्तावदवलम्बयतु।

विदू ॥ सावेगं॥ संमोहिदसिद्धिए पउत्तेण, बह्मणो अग्गदो कादव्वो, अदो भोदीए अहं अग्गणी होमि (१)।

धूता। कहं पच्चादिट्ठह्मि दुवेहिं ॥ वालकमालिङ्ग्य ॥ जाद, तुमं जेव्व पज्जाधावेहि अत्ताणं अह्माणं तिलोदअ दाणाअ अदिक्कन्ते किं मणोरहेहिं ॥ सनिःश्वासं॥ ण क्खु अज्जउत्तो तुमं पज्जवधाविस्सदि (२)।

चारु ॥ आकर्ण्य सहसोपसृत्य॥ अहमेव पर्य्यवस्थापयामि वालिशमिति॥ वालकं बाहुभ्यामुत्थाप्य वक्षसालिङ्गति॥

धूता ॥ विलोक्य॥ अह्महे; अज्जउत्तस्स जेव्व सरसंजोओ ॥ पुनर्निपुणं निरूप्य सहर्षं॥ दिट्ठिआ अज्जउत्तोज्जेव्व एसो, पिअं मे पिअं मे (३)।

वालकः ॥ विलोक्य सहर्षं॥ अह्मो आवुत्त, मं परिष्व

---

(१) समीहितसिद्ध्यै प्रवृत्तेन, ब्राह्मणोऽग्रे कर्त्तव्यः, अतो भवत्या अग्रणीर्भवामि।

(२) कथं प्रत्यादिष्टास्मि द्वाभ्यां; तात, त्वमेव पर्य्यवस्थापयात्मानं अस्माकं तिलोदकदानाय अतिक्रान्तं किं मनोरथैः। न खलु आर्य्यपुत्रस्त्वां पर्य्यवस्थापयिष्यति।

(३) आश्चर्य्यं; आर्य्यपुत्रस्येव स्वरसंयोगः। दिष्ट्या आर्य्यपुत्र एवैषः, प्रियं मे प्रियं मे।

जदि ॥ धूतां प्रति ॥ अज्जए बधावीअसि, आवुत्तजेव्व मं पज्ज वधावेदि (१)।

॥ इति प्रत्यालिङ्गति ॥

चारु। धूतां प्रति।

हा प्रेयसि, प्रेयसि विद्यमाने कोयं कठोरोव्यवसायआसीत्;
अम्भोजिनीलोचनमुद्रणं किं भानावनस्तंगमिते करोति। 180

धूता। अज्ज उत्त, अदोजेव्व सा अचेतणत्ति चुम्बीअदि (२)।

विदू ॥ दृष्ट्वा सहर्षं ॥ ही भोः एदेहिं जेव्व अच्छीहिं पिअ वअस्सो पेक्खीअदि; अहो सदीए पहावो, जदो जलनप्पवेसव्ववसाएण जेव्व पिअसमागमं पाविदा ॥ चारुदत्तं प्रति ॥ जेदु, जेदु, पिअवअस्सो (३)।

चारु। एहि मैत्रेय ॥ इत्यालिङ्गति ॥

चेटी। अहो संविधाणअं; अज्ज वन्दामि (४)।

---

(१) आश्चर्य्यं; पिता मां परिष्वजति; आर्य्ये वर्द्धसे, जनक एव मां पर्य्यवस्थापयति।

(२) आर्य्यपुत्र, अतएव सा अचेतनेति चुम्ब्यते।

(३) आश्चर्य्यं; एताभ्यामेवाक्षिभ्यां प्रियवयस्यः प्रेक्ष्यते; अहोसत्याः प्रभावो, यतोज्वलनप्रवेशव्यवसायेनैव प्रियसमागमं प्रापिता। जयतु, जयतु, प्रियवयस्यः।

(४) अहो संविधानं; आर्य्य वन्दे।

॥ इति चारुदत्तस्य पादयोः पतति ॥

चारु ॥ पृष्ठे करं दत्वा ॥ रदनिके, उत्तिष्ठ ॥ इत्युत्थापयति॥

धूता ॥ वसन्तसेनां दृष्ट्वा ॥ दिट्ठिआ, कुसलिनो वहिणिआ (१)।

वसं। अज्जणा कुमलिनी संवुत्तह्मि (२)।

॥ इत्यन्योन्यमालिंगतः ॥

शर्वि। दिष्ट्या जीवितसुहृद्वर्गआर्य्यः।

चारु। युष्मत्प्रसादेन। *

शर्वि। आर्य्ये वसन्तसेने परितुष्टोराजा भवतीं बन्धुशब्देनानुगृह्णाति।

वसं। अज्ज कदत्यम्हि (३)।

शर्वि ॥ वसन्तसेनावगुण्ठ्य चारुदत्तं प्रति ॥ आर्य्य किमस्य भिक्षोः क्रियतां।

चारु। भिक्षो किं तव बहुमतं।

---

(१) दिष्ट्या कुशलिनी भगिनी।

(२) अधुना, कुशलिनी संवृत्तास्मि।

* यत्सूर्य्योदयभयतः कविनोचितपात्रमेलनं न कृतं,
सुन्दरयुक्तिभिररचयदाचंदनकोक्तिनीलकण्ठस्तत्।

(३) आर्य्य कृतार्थास्मि सम्वृत्ता।

भिक्षुः। इमं ईदिसं अणिच्चत्तणं पेक्खिअ, दिउणदले मे पव्वज्जाय बज्ञमाणे संवुत्ते (१।

चारु। सखे, दृढोऽस्य निश्चयः। तत्पृथिव्यां सर्व्वविहारेषु कुलपतिरयं क्रियतां।

शर्वि। यथाह आर्य्यः।

भिक्षुः। प्रियं नः।

शर्वि। स्थावरकस्य किं क्रियतां।

चारु। सुवृत्त अदासोभवतु। ते चाण्डालाः सर्व्वचाण्डालानामधिपतयोभवन्तु। चन्दनकः पृथिवीदण्डपालकोभवतु; तस्य राष्ट्रियश्यालस्य यथैव क्रिया पूर्व्वं वर्त्तमाना तथैवास्तु।

शर्वि। एवं यथाह आर्य्यः। तदुच्यतां किं ते भूयः प्रियं करोमि।

चारु। अतः परं प्रियमस्ति।

लब्धा चारित्र्यशुद्धिश्चरणनिपतितः शत्रुरप्येष मुक्तः,
प्रोत्खातारातिमूलः प्रियसुहृदचलामार्य्यकः शास्ति राजा;
प्राप्ता भूयः प्रियेयं, प्रियसुहृदि भवान् संगतोमे, च, यस्मो
लभ्यं किं चातिरिक्तं यदपरमधुना प्रार्थयेऽहं भवन्तं।

---

(१) इदमीदृशमनित्यत्वं प्रेक्ष्य, द्विगुणतरोमम प्रव्रज्यायाबहुमानः सम्वृत्तः।

कांश्चिद्दूषयति प्रपूरयति वा, कांश्चिन्नयत्युन्नतिं,
कांश्चित्पातविधौ करोति च पुनः कांश्चिन्नयत्याकुलान्,
अन्योन्यं प्रतिपक्षसंहतिमिमां लोकस्थितिं बोधय
न्नेष क्रीडति कूपयन्त्रघटिकान्यायप्रसक्तोविधिः।

तथापीदमस्तु।

क्षीरिण्यः सन्तु गावो, भवतु वसुमती सर्व्वसंपन्नसस्या,
पर्जन्यः कालवर्षी, सकलजनमनोनन्दिनोवान्तु वाताः,
मोदन्तां जन्मभाजः सततमभिमताब्राह्मणाः सन्तु सन्तः,
श्रीमन्तः पान्तु पृथ्वीं प्रशमितरिपवोधर्म्मनिष्ठाश्च भूपाः।

॥ इति निष्क्रान्ताः सर्व्वे ॥

॥ संहारोनाम दशमोऽङ्कः ॥

समाप्तोऽयं ग्रन्थः।